पतन्तु ते देवि कृपाकटाक्षाः
सर्वत्र भद्राणि भवन्तु नित्यम्।
सर्वोऽपि मृत्योरमृतत्वमेतु
नश्यन्तु अभद्राणि शिवे नमस्ते॥8॥

नमो नमस्तेऽखिलशक्तियुक्ते
नमो नमस्ते जगतां विधात्रि ।
नमो नमस्ते करुणार्द्रचित्ते
नमो नमस्ते सकलार्त्तिहन्त्रि॥9॥

दुर्गे महालक्ष्मि नमो नमस्ते
भद्रे महावाणि नमो नमस्ते ।
कल्याणि मातंगि रमे भवानि
सर्वस्वरूपे सततं नमस्ते ॥10॥

यत् किञ्चिदज्ञातवतेह देवी–
नारायणीयम् रचितं मयेदम्।
अभद्रनाशाय सतां हिताय
तव प्रसादाय च नित्यमस्तु॥11॥

शुभम्



तत् त्वत्पदं यद् ध्रुवमारुरुक्षुः
पुमान् व्रती निश्चलदेहचित्तः।
करोति तीव्राणि तपाम्सि योगी
तस्यै नमस्ते जगदम्बिकायै॥3॥

त्वदाज्ञया वात्यनिलोऽनलश्च
ज्वलत्युदेति द्युमणिः शशी च ।
निजैर् निजैः कर्मभिरेव सर्वे
त्वां पुजयन्ते वरदे नमस्ते ॥4॥

भक्तिर् न वन्ध्या यत एव देवि
रागादिरोगाभिभवाद् विमुक्ताः।
मर्त्यादयस्त्वत्पदमाप्नुवन्ति
तस्यै नमस्ते भुवनेशि मातः॥5॥

सर्वात्मना यो भजते त्वदंघ्रिम्
माया तवामुष्य सुखं ददाति।
दुखं च सा त्वद्विमुखस्य देवि
मायाधिनाथे सततं नमस्ते॥6॥

दुखं न दुखं न सुखं सुखं च
त्वद्विस्मृतिर् दुखमसह्यभारम्।
सुखं सदा त्वत्स्मरणं महेशि
लोकाय शं देहि नमो नमस्ते॥7॥

हा दुर्लभं मे कपिहस्तपुष्प–
सुमाल्यवत् शीर्णमिदं नृजन्म॥9॥

यथा पथा वारि यथा च गौः स्वम्
वत्सं तथाऽऽधावतु मां मनस्ते।
विश्वानि पापानि विनाश्य मे यद्
भद्रं शिवे देहि तदार्त्तिहन्त्री ॥10॥

बहुक्तिभिः किं विदितस्त्वयाऽहम्
पुत्रः शिशुस्ते न च वेद्मि किञ्चित्।
आगच्छ पश्यानि मुखारविन्दम्
पदाम्बुजाभ्यां सततं नमस्ते॥11॥

---

## दशकम् 41
## प्रणामम्

देवि त्वदावास्यमिदं न किञ्चिद्
वस्तु त्वदन्यद् बहुधेव भासि।
देवासुरासृक्पनरादिरूपा
विश्वात्मिके ते सततं नमोऽस्तु॥1॥

न जन्म ते कर्म च देवि लोक–
क्षेमाय जन्मानि दधासि मातः।
करोषि कर्माणि च निस्पृहा त्वम्
जगद्विधात्रै सततं नमस्ते॥2॥

त्वं रक्ष मे प्राणशरीरकर्म–
ज्ञानेन्द्रियान्तःकरणानि देवि।
भवन्तु धर्मा मयि वैदिकास्ते
निराकृतिर्माऽस्तु मिथः कृपार्द्रे॥4॥

यत् श्रूयते यत् खलु दृश्यते च
तदस्तु भद्रं सकलं यजत्रे ।
त्वां संस्तुवन्नस्तसमस्तरोग
आयुः शिवे देवहितं नयानि॥5॥

अविघ्नमायात्विह विश्वतो मे
ज्ञानं प्रसन्ना मम बुद्धिरस्तु।
नावेव सिन्धुं दुरितं समस्तम्
त्वत्सेवयैवातितरामि देवि॥6॥

उर्वारुकं भन्धनतो यथैव
तथैव मुच्येय च कर्मपाशात्।
त्वां त्र्यम्बकां कीर्त्तिमतीं यजेय
सन्मार्गतो मां नय विश्वमातः॥7॥

क्षीणायुषो मृत्युगतान् स्वशक्त्या
दीर्घायुषो वीतभयान् करोषि ।
संगच्छतः संवदतश्च सर्वान्
परोपकारैकरतान् कुरुष्व ॥8॥

मर्त्यो ह्यहं बालिशबुद्धिरेव
धर्मानभिज्ञोऽप्यपराधकृच्च।

पुरः सतां सन्निहिता कृपार्द्रा
सदा मणिद्वीपनिवासिनी च॥10॥

मातर् मदन्तःकरणे निषण्णा
विद्यामयं मां कुरु बन्धमुक्तम्।
बन्धं च मोक्षं च ददास्यसक्ता
दासोऽस्मि ते देवि नमो नमस्ते॥11॥

---

## दशकम् 40
## प्रार्थना

आद्येति विद्येति च कथ्यते या
या चोदयेद् बुद्धिमुपासकस्य।
ध्यायामि तामेव सदाऽपि सर्व-
चैतन्यरूपां भवमोचनीं त्वाम्॥1॥

प्रतिष्ठिताऽन्तःकरणेऽस्तु वाङ् मे
वदामि सत्यं न वदाम्यसत्यम्।
सत्योक्तिरेनं परिपातु मां मे
श्रुतं च मा विस्मृतिमेतु मातः॥2॥

तेजस्वि मेऽधीतमजस्रमस्तु
मा मा परद्वेषमतिश्च देवि।
करोमि वीर्याणि समं सुहृद्भिर्
विद्या परा साऽवतु मां प्रमादात्॥3॥

ब्रह्माण्डकोटीः सुखमावसन्त
उपासकास्ते मनुजाः सुराश्च।
दैत्याश्च सिद्धाश्च तथेतरे च
यदन्ततो यान्ति पदं तदेतत्॥5॥

त्वं मण्डपस्था बहुशक्तियुक्ता
शृणोषि देवीकळगीतकानि।
ज्ञानं विमुक्तिं च ददासि लोक–
रक्षामजस्रं कुरुषे च देवि॥6॥

मञ्चोऽस्ति चिन्तामणिगेहतस्ते
ब्रह्मा हरी रुद्र इहेश्वरश्च।
खुरा भवन्त्यस्य सदाशिवस्तु
विराजते सत्फलकत्वमाप्तः॥7॥

तस्योपरि श्रीभुवनेश्वरि त्वम्
सर्वेश वामाङ्कतले निषण्णा।
चतुर्भुजा भूषणभूषितांगी
निर्व्याजकारुण्यवती विभासि॥8॥

प्रतिक्षणं कारयसि त्वमिच्छा–
ज्ञानक्रियाशक्तिसमन्विताऽत्र।
त्रिमूर्त्तिभिः शक्तिसहस्रयुक्ता
ब्रह्माण्डसर्गस्थितिसम्हृतीश्च॥9॥

सा त्वं हि वाचां मनसोऽप्यगम्या
विचित्ररूपाऽसि सदाऽप्यरूपा।

अन्धं तमोऽहं प्रविशामि मृत्योः
समुद्धरेमं वरदे नमस्ते॥10॥

---------------

## दशकम् 39
## मणिद्वीपनिवासिनि

सुधासमुद्रो जगतां त्रयाणाम्
छत्रीभवन् मञ्जुतरंगफेनः।
सवालुकाशंखविचित्ररत्नः
सतारकव्योमसमो विभाति॥1॥

तन्मध्यदेशे विमलं मणिद्वी-
पाख्यं पदं देवि विराजते ते।
यदुच्यते संसृतिनाशकारि
सर्वोत्तरं पावनपावनं च॥2॥

तत्रास्त्ययोधातुमयो मनोज्ञः
सालो महासारमयस्ततश्च-।
एवं च ताम्रादिमयाः किलाष्टा-
दशातिचित्रा वरणा लसन्ति॥3॥

तैरावृतं ते पदमद्वितीयम्
विभाति चिन्तामणिसद्म देवि।
सन्त्यत्र सत्स्तंभसहस्ररम्य-
श्रृंगारमुक्त्यादिकमण्डपाश्च॥4॥

मुनिर् वसिष्ठः खलु तीर्त्थसेवी
तपोनिधिर् गाधिसुतश्च कोपात्।
उभौ मिथः शेपतुराडिभावम्
प्राप्तः किलैको बकतां परश्च॥5॥

धनानि पृष्टानि गुरूनदातृन्
स्वान् भार्गवान् पुत्रकळत्रभाजः।
क्रुद्धाः परं हैहयभूमिपाला
न्यपीडयन् कोऽत्र विशुद्धचित्तः॥6॥

कुर्यान्न किम् लोभहतो मनुष्यो
युधिष्ठिराद्या अपि धर्मनिष्ठाः।
पितामहं बन्धुजनान् गुरूम् श्च
रणे निजघ्नुः खलु राज्यलोभात्॥7॥

कृष्णोपदिष्टो जनमेजयस्तु
शुद्धान्तरंगः पितरं मखेन।
परीक्षितं पापविमुक्तमार्यम्
विधाय ते प्रापयतिस्म लोकम्॥8॥

सदा सदाचाररतो विविक्ते
देशे निषण्णश्चरणाम्बुजे ते।
ध्यायन्नजस्रं निजवासना यो
निमार्ष्टि स त्वन्मयतामुपैति॥9॥

ज्ञानं न भक्तिर् न तपो न योग–
बुद्धिर् न मे चित्तजयोऽपि मातः।

एनं कुरु त्वं वरदानदक्षम्
मातः कृपार्द्रे वरदे नमस्ते॥10॥

---------=-------

## दशकम् 38
## चित्तशुद्धिप्राधान्यम्

अन्तर्मुखो यः स्वशुभेच्छयैव
स्वयं विमर्शेन मनोमलानि ।
दृष्ट्वा शमाद्यैर् धुनुते समूलम्
स भाग्यवान् देवि तव प्रियश्च ॥1॥

न वेदशास्त्राध्ययनेन तीर्थ–
संसेवया दानतपोव्रतैर् वा।
शुद्धिं मनो याति तव स्मृतेस्तद्
वैशद्यमादर्शवदेति मातः॥2॥

शुद्धिर् न यज्ञेन यजन् शशाङ्कः
पत्नीम् गुरोः प्राप भृशं स्मरार्त्तः।
शतक्रतुर् गौतमधर्मपत्नी–
मगादहल्यां मदनेषु विद्धः ॥3॥

स विघ्नकारी तपसां मुनीनां
गतस्पृहं योगिवरं प्रशान्तं।
हा विश्वरूपं पविना जघान
न किञ्चनाकार्यमधर्मबुद्धेः॥4॥

श्रीः केतुमाले खलु कामरूपम्
तं रम्यके मत्स्यतनुं मनुश्च।
हिरण्मये कूर्मशरीरभाजम्
स्तुवन्ति नारायणमर्यमा च॥5॥

महावराहं कुरुषूत्तरेषु
भू राघवं किंपुरुषे हनूमान्।
तं नारदो भारतवर्षवर्त्ती
नरं च नारायणमाश्रयन्ते ॥6॥

सत्कर्मभूमिर् भरतस्य राज्यम्
सन्त्यत्र वैकुण्ठकथैकसक्ताः।
तीर्थानि पुण्याश्रमपर्वताश्च
जन्मात्र देवाः स्पृहयन्त्यजस्रम्॥7॥

प्रह्ळादपौत्रः सुतलाधिवासः
सुरक्षितश्चाऽऽत्मनिवेदनेन।
वार्धक्यरोगक्ळमभीतिमुक्तो
महाबलिर् वामनमेव नौति ॥8॥

सहस्रशीर्षः शिरसा दधत् क्ष्माम्
हली हरेस्तामसमूर्त्तिरार्यैः।
संस्तूयमानः सहनागकन्यः
पाताळमूले च सलीलमास्ते॥9॥

विचित्ररूपं जगतां हिताय
सर्वे स्तुवन्त्यच्युतमिद्धभक्त्या।

सा सत्यवन्तं मृतमात्मकान्त–
माजीवयन्ती श्वशुरं विधाय।
दूरीकृतान्ध्यं तनयानसूत
यमाद् गुरोराप च धर्मशास्त्रम्॥5॥

स्कन्दस्य पत्नी खलु बालकाधि–
ष्ठात्री च षष्ठीति जगत्प्रसिद्धा।
त्वं देवसेना धनदाऽधनाना–
मपुत्रिणां पुत्रसुखं ददासि॥6॥

सत्कर्मलब्धे तनये मृते तु
प्रियव्रतोऽदूयत भक्तवर्यः।
तं जीवयित्वा मृतमस्य दत्वा
स्वभक्तवात्सल्यमदर्शयस्त्वम्॥7॥

त्वमेव गङ्गा तुळसी धरा च
स्वाहा स्वधा त्वं सुरभिश्च देवि।
त्वं दक्षिणा कृष्णमयी च राधा
दधासि राधामयकृष्णतां च॥8॥

त्वं ग्रामदेवी नगराधिदेवी
वनाधिदेवी गृहदेवता च।
संपूज्यते भक्तजनैश्च या या
सा सा त्वमेवासि महानुभावे॥9॥

यद् यत् श्रुतं दृष्टमपि स्मृतं च
तत् तत् त्वदीयं हि कलांश जालम्।

न किञ्चनास्त्येव शिवे त्वदन्यद्
भूयोपि मूलप्रकृते नमस्ते॥10॥

--------------

## दशकम्–37
## विष्णुमहत्त्वम्

पुरा हरिस्त्वां किल सात्विकेन
प्रसादयामास मखेन देवि।
सुरेषु तं श्रेष्ठतमं चकर्थ
स तेन सर्वत्र बभूव पूज्यः॥1॥

अधर्मवृद्धिश्च यदा त्रिलोके
धर्मक्षयश्चापि तदा भवत्या ।
धर्मं समुद्धर्तुमधर्ममृद्धम्
मार्ष्टुं च देव्येष नियुज्यते हि॥2॥

स ईड्यते सर्वत एव सर्वैः–
पत्न्या च भूतैश्च समं गिरीशः।
इळावृतेऽपूरुषसन्निधाने –
सङ्कर्षणाख्यं भजते मुरारिम्॥3॥

तमेव भद्रश्रवसो हयास्यम्
भद्राश्ववर्षे मुनयः स्तुवन्ति ।
प्रह्ळाद उच्चैर् हरिवर्षवासी
विश्वार्त्तिशान्त्यै नृहरिम् च नौति॥4॥

द्रक्ष्ये कदा त्वां मम देहि भक्तिम्
कारुण्यमूर्त्ते सततं नमस्ते॥13॥

-------------------

## दशकम्–36
## मूलप्रकृतिमहिम

त्वमेव मूलप्रकृतिस्त्वमात्मा
त्वमस्यरूपा बहुरूपिणी च।
दुर्गा च राधा कमला च सावि–
त्र्याख्या सरस्वत्यपि च त्वमेव॥1॥

दुर्गा जगद्दुर्गतिनाशिनी त्वम्
श्रीकृष्णलीला रसिकाऽसि राधा।
शोभास्वरूपाऽसि गृहादिषु श्रीर्
विद्यास्वरूपाऽसि सरस्वती च॥2॥

सरस्वती हा गुरुशापनष्टाम्
त्वम् याज्ञवल्क्याय ददाथ विद्याम्।
त्वामेव वाणीकवचं जपन्तः
प्रसाद्य विद्यां बहवोऽधिजग्मुः॥3॥

त्वं देवि सावित्र्यभिधां दधासि
प्रसादतस्ते खलु वेदमातुः।
लेभे नृपालोऽश्वपतिस्तनूजाम्
नाम्ना च सावित्र्यभवत् किलैषा॥4॥

शप्तो वसिष्ठेन निमिर् विदेहो
भूत्वाऽपि देवि त्वदनुग्रहेण।
ज्ञानं परं प्राप निमेः प्रयोगा–
न्निमेषिणो जीवगणा भवन्ति॥8॥

हा भार्गवा लोभविकोपचित्तैः
प्रपीडिता हैहयवंशजातैः।
हिमाद्रिमाप्ता भवतीं प्रपूज्य
प्रसाद्य भीतेः खलु मुक्तिमापुः॥9॥

दस्रौ युवानं च्यवनं पतिम् च
समानरूपानभिदृश्य मुग्धा।
सती सुकन्या तव संस्मृताया
भक्त्या प्रसादात् स्वपतिम् व्याजानात्॥10॥

सत्यव्रतो विप्रवधूं प्रसह्य
हर्त्ता निरस्तो जनकेन राज्यात्।
वसिष्ठशप्तोऽपि तव प्रसादाद्
राज्येऽभिषिक्तोऽथ दिवं गतश्च॥11॥

हा हा हरिश्चन्द्रनृपो विपत्सु
मग्नः शताक्षीं परदेवतां त्वाम्।
संस्मृत्य सद्यः स्वविपिन्निवृत्तः
कारुण्यतस्ते सुरलोकमाप॥12॥

अगस्त्यपूजां परिगृह्य देवि
विभासि विन्ध्याद्रिनिवासिनी त्वम्।

दुष्कीर्त्तिभीत्या पृथया कुमार्या
त्यक्तं तटिन्यां सुतमर्कलब्धम्।
संप्रार्थिता त्वं परिपालयन्ती
प्रादर्शयः स्वं करुणाप्रवाहम्॥3॥

सुतान् कुरुक्षेत्ररणे हतान् स्वान्
दिदृक्षवे मातृगणाय कृष्णः।
संप्रार्थितस्त्वत्करुणाभिषिक्तः
प्रदर्श्य सर्वान् समतोषयच्च॥4॥

वणिक् सुशीलः खलु नष्टवित्तो
व्रतं चरन् प्राङ् नवरात्रमार्यः।
त्वां देवि संपूज्य दरिद्रभावान्–
मुक्तः क्रमाद् वित्तसमृद्धिमाप॥5॥

देवद्रुहो देवि रणे त्वयैव
दैत्या हता गर्हितधर्मशास्त्राः।
प्रह्ळादमुख्यानसुरान् स्वभक्तान्
देवांश्च सन्त्यक्तरणानकार्षीः॥6॥

पुरन्दरे पापतिरोहिते तत्–
स्थानाधिरूढान्नहुषात् स्मरार्त्तात्।
भीता शची त्वां परिपूज्य दृष्ट्वा
पतिं क्रमाद् भीतिविमुक्तिमाप॥7॥

कृपार्द्रनेत्रो मुनिराह न स्यान्–
मृषाः वचो मे नरके वसेत।
जायेत विष्णुर् भुवी कृष्णनामा
वन्देत तं शापविमोचनार्त्थम्॥9॥

स्वपापमुक्त्यर्त्थमनन्तशक्तिम्
देवीं सदा ध्यायत भक्तिपूताः।
सर्वत्र भूयात् शुभमित्युदीर्य
गायत्रि दध्यौ भवतीं महर्षिः॥10॥

मुञ्चानि मा वाक्शरमन्यचित्ते
कृतघ्नता माऽस्तु ममान्तरंगे।
निन्दानि मा सज्जनमेष भीतो
भवानि पापाद् वरदे नमस्ते॥11॥

---

## दशकम्–35
## अनुग्रहवैचित्र्यम्

भाग्योदये त्रीणि भवन्ति नूनम्
मनुष्यता सज्जनसंगमश्च ।
त्वदीयमाहात्म्यकथाश्रुतिश्च
यतः पुमास्त्वत्पदभक्तिमेति॥1॥

ततः प्रसीदस्यखिलार्त्थकामान्
भक्तस्य यच्छस्यभयं च मातः।
क्षमां कृतागस्सु करोषि चार्यो–
रन्योन्यवैरं शमयस्यनीहा॥2॥

व्रतेषु यज्ञेषु निवृत्तिशास्त्रे-
ष्वपि द्विजा वो विमुखत्वमस्तु।
निषिद्धकर्माचरणे रताः स्त
स्त्रियः प्रजाः वोऽपि तथा भवन्तु॥4॥

सत्संगमो माऽस्तु जगज्जनन्याः
कथामृते वो न रतिः खलु स्यात्।
पाषण्डकापालिकवृत्तिपापैः
पीडा भवेद् वो नरकेषु नित्यम्॥5॥

उक्त्वैवमार्यो मुनिरेत्य गाय-
त्र्याख्यां कृपार्द्रां भवतीं ननाम।
त्वमात्थ दुग्धं भुजगाय दत्तम्
दातुः सदाऽनर्थदमेव विद्धि॥6॥

सदेदृशी कर्मगतिर् महर्षे
शान्तिं भज स्वं तप एव रक्ष ।
मा कुप्यतामेवमृषिर् निशम्य
महानुतापार्द्रमना बभूव॥7॥

शप्ता द्विजा विस्मृतवेदमन्त्रा
लब्ध्वा विवेकं मिळिता मुनिम् तम्।
प्राप्ताः प्रसीदेति मुहुर् वदन्तो
नत्वा त्रपानम्रमुखा अतिष्ठन्॥8॥

काले धरां वृष्टिसमृद्धसस्याम्
दृष्ट्वा जना गौतममानमन्तः।
आपृच्छ्य ते सज्जनसंगपूता
मुदा जवात् स्वस्वगृहाणि जग्मुः॥9॥

दुखानि मे सन्तु यतो मनो मे
प्रतप्त संघट्टितहेमशोभि।
विशुद्धमस्तु त्वयी बद्धरागो
भवानि ते देवि नमोऽस्तु भूयः॥10॥

----------------

दशकम् 34
गौतमशापम्

स्वर्वासिभिर् गौतमकीर्त्तिरुच्चैर्
गीता सभासु त्रिदशैः सदेति।
आकर्ण्य देवर्षिमुखात् कृतघ्ना
द्विजा बभूवुः किल सेर्ष्यचित्ताः॥1॥

तैर् माययाऽऽसन्नमृतिः कृता गौः
सा प्रेषिता गौतमहोमशालाम्।
अगान् मुनेर् जुह्वत एव वह्नौ
हुङ्कारमात्रेण पपात चोर्व्याम्॥2॥

हता हता गौरिह गौतमेने–
त्युच्चैर् द्विजाः प्रोच्य मुनिं निनिन्दुः।
स चेद्धकोपः प्रळयानलाभ–
स्तान् रक्तनेत्रः प्रशपन्नुवाच॥3॥

विज्ञाय सर्वं मुनिराट् कृपालुः
सम्पूज्य गायत्र्यभिधां शिवे त्वाम्।
प्रसाद्य दृष्ट्वा च तवैव हस्ताद्-
लेभे नवं कामदपात्रमेकम्॥4॥

दुकूलसौवर्णविभूषणान्न-
वस्त्रादि गावो महिषादयश्च-।
यद् यज्जनैरीप्सितमाशु तत् तत्
तत्पात्रतो देवि समुद्बभूव॥5॥

रोगो न दैन्यं न भयं न चैव
जना मिथो मोदकरा बभूवुः।
ते गौतमस्योग्रतपःप्रभाव-
मुच्चैर्जगुस्तां करुणार्द्रतां च॥6॥

एवं समा द्वादश तत्र सर्वे
निन्युः कदाचिन् मिळितेषु तेषु।
श्रीनारदो देवि शशीव गाय-
त्र्याश्चर्यशक्तिं प्रगृणन्नवाप॥7॥

स पूजितस्तत्र निषण्ण उच्चैर्
निवेद्य तां गौतमकीर्तिलक्ष्मीम्।
सभासु शक्रादिसुरैः प्रगीताम्
जगाम सन्तो जहृषुः कृतज्ञाः॥8॥

ततः सुरा दम्भविमुक्तिमापुर्
भवन्तु मर्त्याश्च विनम्र शीर्षाः।
अन्योन्यसाहाय्यकराश्च सर्वे
मा युद्धवार्त्ता भुवनत्रयेऽस्तु॥13॥

त्वदिच्छया सूर्यशशाङ्कवह्नि-
वाय्वादयो देवि सुराः स्वकानि।
कर्माणि कुर्वन्ति न ते स्वतन्त्रा-
स्तस्यै नमस्तेऽस्तु महानुभावे॥14॥

---

दशकम् –33
गौतमकथा

शक्रःपुरा जीवगणस्य कर्म-
दोषात् समाः पञ्चदश क्षमायाम्।
वृष्टिं न चक्रे धरणी च शुष्क-
वापीतडागादिजलाशयाऽऽसीत्॥1॥

सस्यानि शुष्काणि खगान् मृगांश्च
भुक्त्वाऽप्यतृप्ताः क्षुधया तृषा च।
निपीडिता मर्त्यशवानि चाहो
मर्त्या अनिष्टान्यपि भुञ्जते स्म॥2॥

क्षुधाऽर्दिताः सर्वजना महापद्-
विमुक्तिकामा मिळिताः कदाचित्।
तपोधनं गौतममेत्य भक्त्या
पृष्टा मुनिं स्वागमहेतुमूचुः॥3॥

त्वां प्राप्तवानग्निविदेव पृष्टोः
देवि स्वमाहात्म्यवचो बभाषे॥7॥

मां मातरिश्वानमवेहि सर्वे
व्यापारवन्तो हि मयैव जीवाः।
न प्राणिनः सन्ति मया विना च
गृह्णामि सर्वं चलयामि विश्वम्॥8॥

इत्युक्तमाकर्ण्य तृणं तदेव
प्रदर्श्य चैतच्चलयेत्यभाणीः।
प्रभञ्जनस्तद् स च कर्म कर्तु–
मशक्त एवास्तमदो निवृत्तः॥9॥

अथातिमानी शतमन्युरन्त–
रग्निम् च वायुं च हसन्नवाप।
त्वां यक्षरूपां सहसा तिरोऽभूः
सोऽदह्यतान्तः स्वलघूत्वभीत्या॥10॥

अथ श्रुताकाशवचोनुसारी
ह्रींकारमन्त्रं स चिराय जप्त्वा।
पश्यन्नुमां त्वां करुणाश्रुनेत्राम्
ननाम भक्त्या शिथिलाभिमानः॥11॥

ज्ञानं परं त्वन्मुखतः स लब्ध्वा
कृताञ्जलिर् नम्रशिरा निवृत्तः।
सर्वामरेभ्यः प्रददौ ततस्ते
सर्वं त्वदिच्छावशगं व्यजानन्॥12॥

मयैव दैत्या बलवत्तरेण
हता न चान्यैरिति शक्रमुख्याः।
देवा अभूवन्नतिदर्पवन्त-
स्त्वं देवि चान्तः कुरुषे स्म हासम्॥2॥

तच्चित्तदर्पासुरनाशनाय
तेजोमयं यक्षवपुर् दधाना ।
त्वं नातिदूरे स्वयमाविरासी-
स्त्वां वासवाद्या ददृशुः सुरौघाः॥3॥

सद्यः किलाऽऽशङ्क्यत तैरिदं किम्
मायाऽऽसुरी वेति ततो मघोना।
अग्निर्नियुक्तो भवतीमवाप्तः
पृष्टस्त्वया कोऽसि कुतोऽसि चेति॥4॥

स चाऽऽह सर्वैर् विदितोऽग्निरस्मि-
मय्येव तिष्ठत्यखिलं जगच्च ।
शक्नोमि दग्धुं सकलं हविर्भुङ्-
मद्वीर्यतो दैत्यगणा जिताश्च ॥5॥

इतीरिता शुष्कतृणं त्वमेकम्
पुरो निधायाऽऽत्थ दहैतदाशु।
एवं ज्वलन्नग्निरिदं च दग्धुम्
कुर्वन् प्रयत्नं न शशाक मत्तः॥6॥

स नष्टगर्वः सहसा निवृत्त-
स्ततोऽनिलो वज्रभृता नियुक्तः।

क्रमाज्जहौ मन्त्रजपं सदा हि
मूढः परप्रोक्तविनेयबुद्धिः॥10॥

एवं गुरौ कुर्वति दैत्यभीतैः
कृत्वा तपोयोगजपाध्वरादि।
जाम्बूनदेश्वर्यमरैः स्तुता त्वम्
प्रसादिता प्रादुरभूः कृपार्द्रा॥11॥

त्वद् देहजातैर् भ्रमरैरनन्तैर्
दैत्यः ससैन्यो विफलास्त्रशस्त्रः।
दष्टो हत स्त्वं च नुतिप्रसन्ना
पश्यत्सु देवेषु तिरोहिताऽभूः॥12॥

स्वदेहतो वै भ्रमरान् विधात्री
त्वं भ्रामरीति प्रथिता जगत्सु।
अहो विचित्रास्तव देवि लीला
नमो नमस्ते भुवनेशि मातः॥13॥

---

दशकम्–32
यक्षकथा

पुरा सुरा वर्षशतं रणेषु
निरन्तरेषु त्वदनुग्रहेण ।
विजित्य दैत्यान् जननीमपि त्वाम्
विस्मृत्य दृप्ता नितरां बभूवुः॥1॥

यद्येष तं मन्त्रजपं जहाति
स दुर्बलः साध्यवधोऽपि च स्यात्।
एवं निशम्य त्रिदशैः प्रहृष्टै-
रभ्यर्थितो देवगुरुः प्रतस्थे॥5॥

स प्राप दैत्यं यतिरूपधारी
प्रत्युद्गतो मन्त्रजपातिसक्तम्।
स्मितार्द्रमूचे कुशली सबन्धु-
मित्रो भवान्  किम् जगदेकवीर॥6॥

दैत्यस्य ते मन्त्रजपेन किम् यो
नूनम् बलिष्ठं त्वबलं करोति।
येनैव देवा अबला रणेषु
त्वया जिता स्त्वं स्वहितं कुरुष्व॥7॥

सन्यासिनो मन्त्रजपेन राग-
द्वेषादि जेतुं सततं यतन्ते।
न त्वं यतिर् नापि मुमुक्षुरर्थ-
कामातिसक्तस्य जपेन किम् ते ॥8॥

एकं हि मन्त्रं समुपास्वहे द्वौ
तेनासि मित्रं मम तद् वदामि-।
मन्त्रश्च मे मुक्तिद एव तुभ्यम्
वृद्धिं न दद्यादयमित्यवेहि ॥9॥

बृहस्पतावेवमुदीर्य याते
सत्यं तदुक्तं दितिजो विचिन्त्य।

मातेव पत्नीव सुतेव वा त्वम्
विभासि भक्तस्य नमो नमस्ते॥16॥

-----------------

## दशकम् –31
## भ्रामर्यवतारम्

कश्चित् पुरा मन्त्रमुदीर्य गाय–
त्रीति प्रसिद्धं दितिजोऽरुणाख्यः।
चिराय कृत्वा तप आत्मयोनेः
प्रसादितादाप वरानपूर्वान्॥1॥

स्त्रीपुम्भिरस्त्रैश्च रणेद्विपादै–
श्चतुष्पदैश्चाप्युभयात्मकैश्च।
अवध्यतां देवपराजयं च
लब्ध्वा स दृप्तो दिवमाससाद॥2॥

रणे जिता दैत्यभयेन लोक–
पालैः सह स्वस्वपदानि हित्वा।
देवा द्रुताः प्राप्य शिवं रिपूणाम्
सम्यग् वधोपायमचिन्तयंश्च॥3॥

तदाऽभवत् काप्यशरीरिणी वाग्–
भजेत देवीं शुभमेव वः स्यात्।
दैत्योऽरुणो वर्धयतीह गाय–
त्र्युपासनेनाऽऽत्मबलं त्वधृष्यम्॥4॥

उक्त्वाऽखिलं सम्सृतिमुक्तिमार्गम्
सुरेषु पश्यत्सु तिरोदधाथ।
श्रुत्वाऽद्रिमुख्यास्तव गीतमुच्चैर्
देवा जपध्यानपरा बभूवुः॥11॥

अथैकदा प्रादुरभूत् हिमाद्रौ
शाक्तं महो दक्षगृहे यथा प्राक्।
क्रमेण तद् देवि बभूव कन्या
सा पार्वतीति प्रथिता जगत्सु॥12॥

हिमाद्रिणैषा च हराय दत्ता
तयोः सुतः स्कन्द इति प्रसिद्धः।
स तारकाख्यं दितिजं निहत्य
ररक्ष लोकानखिलान् महेशि॥13॥

दुर्वाससः शापबलेन शक्रो
नष्टाखिलश्रीर्वचनेन विष्णोः।
क्षीरोदधिं सासुरदेवसङ्घो
ममत्थ तस्मादुदभूच्च लक्ष्मीः॥14॥

या पूजितेन्द्रेण रमा तवैका
शक्तिः स्वरैश्वर्यपुनःप्रदानात्।
शापान् मुनेर् देवगणान्विमोच्य
कटाक्षतस्ते हरिमाप भूयः॥15॥

त्वं सर्वशक्तिर् न जिताऽसि केना–
प्यन्यान् जयस्येव सदा शरण्या।

निशम्य तेषां श्रुतिवाक्यगर्भ–
स्तुतिम् प्रसन्ना विबुधांस्त्वमात्थ–।
अलं विषादेन सुराः समस्तम्
जाने हरिष्यामि भयं द्रुतं वः॥6॥

हिमाद्रिपुत्री विबुधास्तदर्थम्
जायेत गौरी मम शक्तिरेका।
सा च प्रदेया वृषभध्वजाय
तयोः सुतस्तं दितिजं च हन्यात्॥7॥

इत्थं निशम्यास्तभयेषु देवे–
ष्वभ्यर्थिता देवि हिमाचलेन।
त्वं वर्णयन्ती निजतत्वमेभ्यः
प्रदर्शयामासिथ विश्वरूपम्॥8॥

सहस्रशीर्षं च सहस्रवक्त्रम्
सहस्रकर्णं च सहस्रनेत्रम्।
सहस्रहस्तं च सहस्रपाद–
मनेकविद्युत्प्रभमुज्वलं च॥9॥

दृष्ट्वेदमीश्वर्यखिलैर्भियोक्ता
त्वं चोपसम्हृत्य विराट्स्वरूपम्।
कृपावती स्मेरमुखी पुनश्च
निवृत्तिमार्गं गिरये न्यगादीः॥10॥

## दशकम्–30
## श्रीपार्वत्यवतारम्

समाधिमग्ने गिरिशे विरिञ्चात्
तपःप्रसन्नात् किल तारकाख्यः।
दैत्यो वरं प्राप्य विजित्य देवान्
सबान्धवः स्वर्गसुखान्यभुंक्त॥1॥

वरैः स भर्गौरसपुत्रमात्र–
वध्यत्वमाप्तोऽस्य च पत्न्यभावात्।
सर्वाधिपत्यं स्वबलं च मोहान्
मत्तो भृशं शाश्वतमेव मेने॥2॥

नष्टाखिलाः श्रीहरये सुरास्ते
निवेदयामासुरशेषदुःखम्।
स चाऽऽह देवा अनयेन नून–
मुपेक्षते नो जननी कृपार्द्रा॥3॥

तद्विस्मृतेर्जातमिदं करेण
यष्ट्या च या ताडयति स्वपुत्रम्।
तामेव बालः स निजेष्टदात्रीम्
सास्रं रुदन्मातरमभ्युपैति॥4॥

माता हि नः शक्तिरिमां प्रसन्नाम्
कुर्याम भक्त्या तपसा च शीघ्रम्।
सर्वापदः सैव हरिष्यतीति
श्रुत्वामरास्त्वां नुनुवुर्महेशि॥5॥

यतो यतः पेतुरिमे स्थलानि
सर्वाणि तानि प्रथितानि लोके।
इमानि पूतानि भवानि देवी–
पीठानि सर्वाघहराणि भान्ति॥6॥

त्वमेकमेवाद्वयमत्र भिन्न–
नामानि धृत्वा खलु मन्त्रतन्त्रैः।
संपूज्यमाना शरणागतानाम्
भुक्तिं च मुक्तिं च ददासि मातः॥7॥

निर्विण्णचित्तः स सतीवियोगात्
शिवः स्मरंस्त्वां कुहचिन्निषण्णः।
समाधिमग्नोऽभवदेष लोकः
शक्तिं विना हा विरसोऽलसश्च॥8॥

चिन्ताकुला मोहधियो विशीर्ण्ण–
तोषा महारोगनिपीडिताश्च।
सौभाग्यहीना विहताभिलाषाः
सर्वे सदोद्विग्नहृदो बभूवुः॥9॥

शिवोऽपि शक्त्या सहितः करोति
सर्वं वियुक्तश्च तया जडः स्यात्।
मा माऽस्तु मे शक्तिवियोग एष
दासोऽस्मि भूयो वरदे नमस्ते॥10॥

---------------------

## दशकम् –29
## देवीपीठोत्पत्ति

अथैकदाऽदृश्यत दक्षगेहे
शाक्तं महस्तच्च बभूव बाला।
विज्ञाय ते शक्तिमिमां जगत्सु
सर्वेऽपि हृष्टा अभवत् क्षणश्च॥1॥

दक्षः स्वगेहापतितां चकार
नाम्ना सतीं पोषयति स्म तां सः।
स्मरन् वचस्ते गिरिशाय काले
प्रदाय तां द्वौ समतोषयच्च॥2॥

एवं शिवःशक्तियुतः पुनश्च
बभूव गच्छत्सु दिनेषु दक्षः।
दैवात् शिवद्वेषमवाप देहम्
तत्पोषितं स्वं विजहौ सती च॥3॥

दुखेन कोपेन च हा सतीति
मुहुर् वदन्नुद्धृतदारदेहः।
बभ्राम सर्वत्र हरः सुरेषु
पश्यत्सु शार्ङ्गी शिवमन्वचारीत्॥4॥

रुद्रांसविन्यस्तसतीशरीरम्
विष्णुः शरौघैर्बहुशश्चकर्त।
एकैकशः पेतुरमुष्य खण्डा
भूमौ शिवे साष्टशतं स्थलेषु॥5॥

हा विस्मृतं शक्त्यवमानदोषाद्
विनष्टशक्ती खलु तावभूताम्॥7॥

तौ पूर्ववत् स्तामिह शक्तिरेका
जायेत दक्षस्य कुले मदीया।
क्षीराब्धितोऽन्या च पुरारिराद्याम्
गृह्णातु पश्चादितरां च विष्णुः॥8॥

सर्वे स्वशक्तिं परिपूज्य माया-
बीजादिमन्त्रान्विधिवज्जपन्तः।
विराट्स्वरूपं मम रूपमेतत्
सच्चित्स्वरूपं च सदा स्मरेत॥9॥

प्रयात तुष्टा जगतां शुभं स्या-
देवं त्वमाभाष्य तिरोदधाथ।
कारुण्यतस्ते गिरिशो हरिश्च
शक्तावभूतां निजकर्म कर्तुम्॥10॥

मातः कटाक्षा मयि ते पतन्तु
मा माऽस्तु मे शक्त्यवमानपापम्।
सर्वान् स्वधर्मान् करवाण्यभीतो
भद्रं मम स्यात् सततं नमस्ते॥11॥

------------------

ततो विधिस्तौ तरुवद्विचेष्टौ
तेजोविहीनावभिवीक्ष्य भीतः।
निमीलिताक्षः सकलं विचिन्त्य
जानन् सुतान् दक्षमुखानुवाच॥2॥

पुत्रा हरिम् पश्यत धूर्ज्जटिम् च
यौ नष्टशक्ती खलु शक्तिकोपात्।
ततो जगद्धारयुतोऽस्मि यूयम्
शक्तिं तपोभिः कुरुत प्रसन्नाम्॥3॥

शक्तेः प्रसादेन हि पूर्ववत् तौ
स्यातां यशोवृद्धिरनेन वः स्यात्।
शक्तिश्च यत्रावतरत्यमोघ-
मेतत् कुलं याति कृतार्थतां च॥4॥

शक्तेः कटाक्षैर्जगतोऽस्तु भद्र-
मेवं निशम्याऽऽशु हिमाद्रिमेत्य।
दक्षादयो ध्यानजपादिभिस्त्वा-
माराध्य भक्त्याऽब्दशतानि निन्युः॥5॥

दृष्टा पुरस्तैस्तु नुता त्वमात्थ
भीत्याऽलमार्त्त्या च हितं ददामि।
गौरी च लक्ष्मीश्च ममैव शक्ती
ते शम्भवे प्राग् हरये च दत्ते॥6॥

तौ शक्तिसाहाय्यत एव दैत्यान्
निजघ्नतुः सत्यमिदं तु ताभ्याम्।

गतायुराविश्य परात्मनि त्व–
य्यवाप मुक्तिं मिषतां सुराणाम्॥9॥

वेदान् हृतानब्जभवानने त्वम्
पुनश्च निक्षिप्य जगत्सुरक्षाम्।
कृत्वा नुता देवगणैर् नरैश्च
तुष्टा तिरोऽभूः करुणार्द्रनेत्रा॥10॥

भक्तस्य वै दुर्गतिनाशिनी त्वम्
सुखप्रदा दुर्गमहन्त्रि मातः।
दुर्गेति नाम्ना विदिता च लोके
विचित्ररूपास्तव देवि लीलाः॥11॥

कोप्यस्ति चित्ते मम दुर्गमोऽयम्
ज्ञातस्त्वया नैव मया तु देवि।
यः सन्ततं द्रुह्यति मे तमाशु
संहृत्य मां रक्ष नमो नमस्ते॥12॥

-------------

## दशकम्–28
## शक्त्यवमानदोषम्

हालाहलाख्यानसुरान् पुरा तु
निजघ्नतुर्विष्णुहरौ रणान्ते ।
स्वेनैव वीर्येण जयोऽयमेवम्
तौ मोहितौ दर्पमवापतुश्च॥1॥

त्यक्त्वा दिवं ते गिरिगह्वरेषु
निलीय वर्षाणि बहूनि निन्युः।
वृष्टेरभावाद् धरणी च शुष्क-
जलाशया तर्षनिपीडिताऽभूत्॥4॥

सर्वे तृषार्त्ताश्च हिमाद्रिमेत्य
त्वां ध्यानपुजानुतिभिर्भजन्तः।
प्रसादयामासुरनेककोटि-
ब्रह्माण्डकर्त्रीमखिलार्त्तिहन्त्रीम्॥5॥

दृष्ट्वा दयार्द्राक्षिशता त्वमेभिः
कृपाश्रुवर्षैर्नवरात्रमूर्व्याम्।
जलाशयान्पूर्णजलांश्चकर्थ
जनाः शताक्षीत्यभिधां ददुस्ते॥6॥

क्षुत्पीडितानां च चराचराणाम्
सर्वत्र नानाविधमन्नमिष्टम्।
स्वादूनि मूलानि फलानि चादाः
शाकंभरीति प्रथिता ततोऽभूः॥7॥

दैत्यस्तु विज्ञाय समस्तमस्त्र-
शस्त्रैः ससैन्यः प्रहरन् वपुस्ते।
रणाङ्कणे सायकविद्धगात्रः
सशब्दमूर्व्यां तरुवत् पपात॥8॥

स चासुरात्मा खलु वेदमन्त्रान्
चिरं पठंस्त्वामभिवीक्षमाणः।

मन्वन्तरे भूपतिरष्टमे स
सावर्णिनामा च मनुर्बभूव॥16॥

त्वं भुक्तिकामाय ददासि भोगम्
मुमुक्षवे संसृतिमोचनं च।
किञ्चिन्न पृच्छामि परं विमूढो
नमामि ते पादसरोजयुग्मम्॥17॥

---------------

दशकम्–27
शताक्षि अवतारम्

दैत्यः पुरा कश्चन दुर्गमाख्यः
प्रसादितात् पद्मभवात् तपोभिः।
अवैदिकं वैदिकमप्ययगृह्णान्–
मन्त्रं समस्तं दिविषज्जयैषी॥1॥

वेदे गृहीते दितिजेन विप्राः
श्रुतिस्थिरा विस्मृतवेदमन्त्राः।
सान्ध्यानि कर्माण्यपि नैव चक्रुः
क्षितिस्त्ववेदाध्ययना बभूव॥2॥

हृतेषु मन्त्रेष्वखिलेषु पूजा–
यज्ञादि भूमौ न कृतं मनुष्यैः।
सुरा अशक्तास्तदलाभखिन्ना
दैत्येन युद्धे बलिना जिताश्च॥3॥

य एतदाप्नोति स सर्वमुक्तो
द्वेषश्च रागश्च न तस्य भूप।
ज्ञानं द्वितीयं खलु शास्त्रवाक्य-
विचारतो बुद्धिमतैव लभ्यम्॥11॥

शमादिहीनो न च शास्त्रवाक्य-
विचारमात्रेण विमुक्तिमेति।
देव्याः कटाक्षैर् लभते च भुक्तिम्
मुक्तिं च सा केवलभक्तिगम्या॥12॥

संपूज्य तां साकमनेन दुर्गाम्
कृत्वा प्रसन्नां स्वहितं लभस्व।
श्रुत्वा मुनेर्वाक्यमुभौ महेशि
त्वां पूजयामासतुरिद्धभक्त्या॥13॥

वर्षद्वयान्ते भवतीं समीक्ष्य
स्वप्ने सतोषावपि तावतृप्तौ।
दिदृक्षया जाग्रति चापि भक्ता-
वाचेरतुर् द्वौ कठिनव्रतानि॥14॥

वर्षत्रयान्ते सुमुखीं प्रसन्नाम्
त्वां वीक्ष्य तौ तुष्टुवतुः प्रहृष्टौ।
दैवात् समाधिस्त्वदनुग्रहेण
लब्ध्वा परं ज्ञानमवाप मुक्तिम्॥15॥

भोगाविरक्तः सुरथस्तु शीघ्रम्
निष्कण्टकं राज्यमवाप भूयः।

अनेन साकं सुरथो विनीतो
मुनिं प्रणम्याऽऽह समधिनामा।
गृहान्निरस्तोऽपि गृहादिचिन्ताम्
करोति सोत्कण्ठमयं महर्षे॥6॥

ब्रह्मैव सत्यं परमद्वितीयं
मिथ्या जगत् सर्वमिदं च जाने।
तथाऽपि मां बाधत एव राज्य-
गृहादिचिन्ता वद तस्य हेतुम्॥7॥

ऊचे तपस्वी शृणु भूप माया
सर्वस्य हेतुः सगुणाऽगुणा सा।
बन्धं च मोक्षं च करोति सैव
सर्वेऽपि मायावशगा भवन्ति॥8॥

ज्ञानं हरेरस्ति विधेश्च किन्तु
क्वचित् कदाचिन् मिळितौ मिथस्तौ।
विमोहितौ कस्त्वमरे नु कस्त्व-
मेवं विवादं किल चक्रतुः स्म॥9॥

ज्ञानं द्विधैकं त्वपरोक्षमन्यत्
परोक्षमप्येतदवेहि राजन्।
आद्यं महेश्याः कृपया विरक्त्या
भक्त्या महत् संगमतश्च लभ्यम्॥10॥

## दशकम्–26
## सुरथकथा

राजा पुराऽऽसित् सुरथाभिधानः
स्वारोचिषे चैत्रकुलावतंसः।
मन्वन्तरे सत्यरतो वदान्यः
सम्यक्प्रजापालनमात्रनिष्ठः॥1॥

वीरोऽपि दैवात् समरे स कोला–
विध्वंसिभिः शत्रुबलैर्जितः सन्।
त्यक्त्वा स्वराज्यं वनमेत्य शान्तम्
सुमेधसं प्राप मुनिं शरण्यम्॥2॥

तपोवनं निर्भयमावसन् द्रु–
च्छायाश्रितः शीतळवातपृक्तः।
स एकदा राज्यगृहादिचिन्ता–
पर्याकुलः कंचिदपश्यदार्तम्॥3॥

राजा तमूचे सुरथोऽस्मि नाम्ना
जितोऽरिभिर्भ्रष्टविभूतिजालः।
गृहादिचिन्तामथितान्तरंगः
कुतोऽसि कस्त्वं वद मां समस्तम्॥4॥

श्रुत्वेति स प्रत्यवदत् समाधि–
नामाऽस्मि वैश्यो हृतसर्ववित्तः।
पत्नीसुताद्यैः स्वगृहान्निरस्त–
स्तथाऽपि सोत्कण्ठमिमान्स्मरामि॥5॥

हिमाद्रिशृंगेषु मनोहरांगी
सिम्हाधिरूढा मृदुगानलोला।
श्रोत्राणि नेत्राण्यपि देहभाजाम्
चकर्षिथाष्टादशबाहुयुक्ता॥5॥

विज्ञाय सुम्भः किल दूतवाक्यात्
त्वां मोहनांगीं दयितां चिकीर्षुः।
त्वदन्तिके प्रेषयतिस्म दूतान्
एकैकशः स्निग्धवचोविलासान्॥6॥

त्वां प्राप्य ते काळिकया समेता–
मेकैकशः सुम्भगुणान् प्रभाष्य।
पत्नी भवास्येति कृतोपदेशा–
स्तत्प्रातिकुल्यात् कुपिता बभूवुः॥7॥

सुम्भाज्ञया धूम्रविलोचनाख्यो
रणोद्यतः काळिकया हतोऽभूत्।
चण्डं च मुण्डं च निहत्य काळी
त्वत्फालजा तद्रुधिरं पपौ च॥8॥

चामुण्डिकेति प्रथिता ततः सा
त्वां रक्तबीजोऽथ युयुत्सुराप।
यद्रक्तबिन्दुत्भवरक्तबीज–
संघैर् जगद्व्याप्तमभूदशेषम्॥9॥

ब्रह्मेन्द्र पाश्यादिकदेवशक्ति-
कोट्यो रणं चक्रुररातिसंघैः।
तत्संगरं वर्णयितुं न शक्तः
सहस्रजिह्वोऽपि पुनः किमन्ये॥10॥

रणेऽतिघोरे विवृतानना सा
काळी स्वजिह्वां खलु चालयन्ती।
त्वच्छस्त्रकृत्ताखिलरक्तबीज-
रक्तं पपौ गर्ज्जनभीतदैत्या॥11॥

त्वया निसुम्भस्य शीरो निकृत्तम्
सुम्भस्य तत् काळिकयाऽपि चान्ते।
अन्येऽसुरास्त्वां शिरसा प्रणम्य
पाताळमापूस्त्वदनुग्रहेण॥12॥

हतेषु देवा रिपुषु प्रणम्य
त्वां तुष्टुवुः स्वर्गमगुः पुनश्च।
ते पूर्ववद् यज्ञहविर् हरन्तो
भूमाववर्षन् जहृषुश्च मर्त्त्याः॥13॥

मातर्मदीये हृदी सन्ति दम्भ-
दर्पाभिमानाद्यसुरा बलिष्ठाः।
निहत्य तान् देह्यभयं सुखं च
त्वमेव माता मम ते नमोऽस्तु॥14॥

---------------

त्वां सम्स्मरेयं न च वा स्मरेयम्
विपत्सु मा विस्मर मां विमूढम्।
रुदन् बिडालार्भकवन्न किञ्चित्
शक्नोमि कर्तुं शुभदे नमस्ते॥11॥

----------------

## दशकम्–25
### महासरस्वत्यवतारम् (सुम्भादिवधम्)

अथामराः शत्रुविनाशतृप्ता–
श्चिराय भक्त्या भवतीं भजन्तः।
मन्दीभवद्भक्तिहृदः क्रमेण
पुनश्च दैत्याभिभवं समीयुः॥1॥

सुम्भो निसुम्भश्च सहोदरौ स्वैः
प्रसादितात् पद्मभवात् तपोभिः।
स्त्रीमात्रवध्यत्वमवाप्य देवान्
जित्वा रणेऽध्यूषतुरैन्द्रलोकम्॥2॥

भ्रष्टश्रियस्ते तु गुरूपदेशाद्
हिमाद्रिमाप्ता नुनुवुः सुरास्त्वाम्।
तेषां पुरश्चाद्रिसुताऽऽविरासीत्
स्नातुं गता सा किल देवनद्याम्॥3॥

तद्देहकोशाद् त्वमजा प्रजाता
यतः प्रसिद्धा खलु कौशिकीति।
महासरस्वत्यभिधां दधाना
त्वं राजसी शक्तिरितीर्यसे च॥4॥

कृपाकटाक्षास्तव देवि यस्मिन्
पतन्ति तस्याऽऽत्मजवित्तदाराः।
यच्छन्ति सौख्यं न पतन्ति यस्मिन्
त एव दुखं ददतेऽस्य नूनम्॥6॥

पश्याम नित्यं तव रूपमेतत्
कथाश्च नामानि च कीर्त्तयाम।
नमाम मूर्ध्ना पदपङ्कजे ते
स्मराम कारुण्यमहाप्रवाहम्॥7॥

त्वमेव माताऽसि दिवौकसां नो
नान्या द्वितीया हितदानदक्षा।
अन्ये सुता वा तव सन्ति नो वा
न रक्षिता नस्त्वदृते महेशि॥8॥

क्व त्वं वयं क्वेति विचिन्त्य सर्वम्
क्षमस्व नो देव्यपराधजालम्।
यदा यदा नो विपदो भवन्ति
तदा तदा पालय पालयास्मान्॥9॥

इति स्तुवत्सु त्रिदशेषु सद्यः
कृपाश्रुनेत्रैव तिरोदधाथ।
ततो जगद् देवि विभूतिपूर्णम्
बभूव धर्मिष्ठसमस्तजीवम्॥10॥

# दशकम्–24

## महिषासुरवधम्-देवीस्तुति

देवि त्वया बाष्कळदुर्मुखादि–
दैत्येषु वीरेषु रणे हतेषु।
सह्याकृतस्त्वामनुनेतुकामो
मोघप्रयत्नो महिषश्चु कोप॥1॥

त्वां कामरूपः खुरपुच्छ शृंगैर्
नानास्त्रशस्त्रैश्च भृशं प्रहर्त्ता।
गर्ज्जन् विनिन्दन् प्रहसन् धरित्रीम्
प्रकंपयंश्चासुरराड् युयोध॥2॥

जपारुणाक्षी मधुपानतुष्टा
त्वं चारिणाऽरेर्महिषस्य कण्ठम्।
छित्वा शिरो भूमितले निपात्य
रणाङ्कणस्था विबुधैः स्तुताऽभूः॥3॥

मातस्त्वया नो विपदो निरस्ता
अशक्यमन्यैरिदमद्भुतांगि।
ब्रह्माण्डसर्गस्थितिनाशकर्त्रीम्
कस्त्वां जयेत् केन कथं कुतो वा॥4॥

विद्यास्वरूपाऽसि महेशि यस्मिन्
स वै परेषां सुखदः कविश्च।
त्वं वर्त्तसे यत्र सदाऽप्यविद्या–
स्वरूपिणी स त्वधमः पशुः स्यात्॥5॥

तत् तु त्वमासीः शुभदे महाल
क्ष्म्याख्या जगन्मोहनमोहनाङ्गी।
त्वं ह्येव भक्ताभयदानदक्षा
भक्तद्रुहां भीतिकरी च देवि॥8॥

सद्यस्त्व मुच्चैश्चकृषेऽट्टहासम्
सुराः प्रहृष्टा वसुधा चकम्पे।
चुक्षोभ सिन्धुर्गिरयो विचेलुर्
दैत्यश्च मत्तो महिषश्चुकोप॥9॥

त्वां सुन्दरीं चारमुखात् स दैत्यो
विज्ञाय कामी विससर्ज्ज दूतम्।
स चेश्वरीं दैत्यगुणान् प्रवक्ता
त्वां नेतुकामो विफलोद्यमोऽभूत्॥10॥

प्रलोभनैस्त्वामथ देवशक्तिम्
ज्ञात्वाऽपि वाक्यैरनुनेतुकामः।
एकैकशः प्रेषयतिस्म दूतान्
त्वां कामिनीं कर्त्तुमिमे न शेकुः॥11॥

अवेहि मां पुच्छविषाणहीनम्
भारं वहन्तं महिषं द्विपादम्।
हिम्सन्ति मां स्वर्थिजनास्त्वमेव
रक्षाकरी मे शुभदे नमस्ते॥12॥

-------------

चिरं भृशं दैत्यनिपीडितास्ते
देवाः समं पद्मजशङ्कराभ्याम्।
हरिम् समेत्याऽऽसुरदौष्ट्यमूचू-
स्त्वां संस्मरन् देवि मुरारिराह॥3॥

सुरा वयं तेन रणेऽतिघोरे
पराजिता दैत्यवरो बलिष्ठः।
मत्तो भृशं पुम्भिरवध्यभावा-
न्न नः स्त्रियो युद्धविचक्षणाश्च॥4॥

तेजोभिरेका भवतीह नश्चेत्
सैवासुरान् भीमबलान् निहन्ता।
यथा भवत्येतदरं तथैव
सम्प्रार्थयामोऽवतु नो महेशी॥5॥

एवं हरौ वक्तरि पद्मजाताल्
तेजोऽभवद् राजसरक्तवर्णम्।
शिवादभूत् तामसरौप्यवर्णम्
नीलप्रभं सात्विकमच्युताच्च॥6॥

तेजांस्यभूवन् विविधानि शक्र-
मुखामरेभ्यो मिषतोऽखिलस्य।
सम्योगतस्तान्यचिरेण मातः
स्त्रीरूपमष्टादशहस्तमापुः॥7॥

सत्या च तं गोवृषवत् सरोषम्
बध्वा तरौ दुर्वचसाऽभ्यषिञ्चत्॥7॥

श्रीनारदायातिथये तया स
दत्तोथ मुक्तो मुनिना च नीतः।
ततस्तयाऽस्मै कनकं प्रदाय
पुनर् गृहीतस्त्रपयाऽऽप मौनम्॥8॥

सूतीगृहाद् भीष्मकजासुते स
प्रद्युम्ननाम्नीश्वरि शम्बरेण।
हृते शिशौ निर्मथिताभिमान
उच्चैरुदंस्त्वां शरणं प्रपन्नः॥9॥

पुत्रार्थिनीं जाम्बवतीमपुत्राम्
स तोषयिष्यन्नुपमन्युशिष्यः।
मुण्डी च दण्डी च शिवस्य शैले
मन्त्रं जपन् घोरतपश्चकार॥10॥

वरेण भर्गस्य दशात्मजान् सा
प्रासूत सर्वा दयिताश्च शौरेः।
तथैव लब्ध्वा स सुतायुतानि
सुखं न लेभे निजकर्मदोषात्॥11॥

शापादृषीणां धृतराष्ट्र पत्न्या-
श्चान्योन्यवैरेण कृताहवेषु।
सर्वे हता हन्त कुलं यदूनाम्
महत् प्रदग्धं वनमग्निनेव॥12॥

व्याधेषुविद्धो मृतिमाप कृष्णः
कुशस्थली चाब्धिजलाप्लुताऽभूत्।
हा जह्रिरे दस्युभिरेनसाऽष्टा–
वक्रस्य शापेन यदुस्त्रियश्च॥13॥

एवं हरिः कर्मफलान्यभुङ्क्त
न कोपि मुच्येत च कर्मबन्धात्।
दुखं त्वभक्तस्य सुदुस्सहं स्याद्
भक्तस्य ते तत् सुसहं भवेच्च॥14॥

जानास्यहं ते पदयोरभक्तो
भक्तो नु किं वेति न चैव जाने।
त्वं सर्वशक्ता कुरु मां सुशक्तम्
सर्वत्र भूयोपि शिवे नमस्ते॥15॥

---

## दशकम्–23
### महालक्ष्म्यवतारम्

रम्भस्य पुत्रो महिषासुरः प्राक्
तीव्रैस्तपोभिर् द्रुहिणात् प्रसन्नात्।
अवध्यतां पुम्भिरवाप्य धृष्टो
न मे मृतिः स्यादिति च व्यचिन्तीत्॥1॥

स चिक्षुराद्यैरसुरैः समेतः
शक्रादिदेवान्युधि पद्मजं च।
रुद्रं च विष्णुं च विजित्य नाके
वसन् बलाद् यज्ञहविर् जहार॥2॥

हैयंगवीनं मथितं पयश्च
गोपीर् विलज्जः सततं ययाचे।
स चाम्बया गोरसचौर्यचुञ्चु-
रुलूखले पाशवरेण बद्धः॥2॥

वनेषु भीमातपशुष्कगात्रो
गाश्चारयन् कण्टकविद्धपादः।
वन्याम्बुपायी फलमूलभक्षी
दिने दिने ग्लानिमवाप कृष्णः॥3॥

दैवेन मुक्तः स च गोपदास्या-
दक्रूरनीतो मथुरां प्रविष्टः।
कंसं निहत्यापि हताभिलाष-
स्तत्रोग्रसेनस्य बभूव दासः॥4॥

दृष्ट्वा जरासन्धचमूं भयेन
स बन्धुमित्रो मथुरां विहाय।
धावन् कथञ्चिद् बहुदुर्गमार्त्तः
स द्वारकाद्वीपपुरं विवेश॥5॥

स रुक्मिणीम् जाम्बवतीं च भामाम्
कन्यास्तथा द्व्यष्टसहस्रमन्याः।
समुद्वहन् सस्मितनर्मलापः
क्रीडामृगोऽभूत् सततं वधूनाम्॥6॥

स दस्युवृत्तिस्त्रिदिवाज्जहार
भामानियुक्तः सुरपारिजातम्।

दिवि स्थिता शंखगदादिहस्ता
सुरैः स्तुता स्मेरमुखी त्वमात्थ॥12॥

वधेन किं मे तव कंस जात–
स्तवान्तकः क्वाप्यविदूरदेशे।
मा द्रुह्यतां साधुजनो हितं स्वम्
विचिन्तयेत्युक्तवती तिरोऽऽभूः॥13॥

स भोजराट् स्वान्तकनाशनाय
सर्वान् शिशून् हन्तुमरं बलिष्ठान्।
वत्साघमुख्यानसुरान् नियुज्य
कृतार्थमात्मान्ममन्यतोच्चैः॥14॥

कम्सोऽस्ति मे चेतसि कामलोभ–
क्रोधादिमन्त्रिप्रवरैः समेतः।
सद्भावहन्ता खलु नन्दपुत्रि
तं नाशय त्वच्चरणं नमामि॥15॥

---------------

## दशकम्–22
## कृष्णकथा

श्रियःपतिर् गोमलमूत्रगन्धि–
न्यस्तप्रभो गोपकुले विषण्णः।
कृष्णाभिधो वत्सबकादिभीतो
रुदन् सदा देवि निनाय बाल्यम्॥1॥

व्योमोत्थ वाक्येन तवैव बालम्
गृह्णन्नदृष्टः खलु गेहपालैः।
निद्रां गतैस्त्वद्विवृतेन शौरिर्
द्वारेण यातो बहिरात्ततोषम्॥7॥

त्वं स्वेच्छया गोपकुले यशोदा–
नन्दात्मजा स्वापितजीवजाले।
अजायथा भक्तजनार्त्तिहन्त्री
सर्वं नियन्त्री सकलार्थदात्री॥8॥

तव प्रभावाद् वसुदेव एको
गच्छन्नभीतो यमुनामयत्नम्।
तीर्त्वा नदीं गोकुलमाप तत्र
दास्याः करे स्वं तनयं ददौ च॥9॥

तयैव दत्तामथ बालिकां त्वा–
मादाय शीघ्रं स ततो निवृत्तः।
कारागृहं प्राप्य ददौ प्रियायै
स चाभवत् पूर्ववदेव बद्धः॥10॥

त्वद्रोदनोत्थापितगेहपालैर्
निवेदितो भोजपतिः समेत्य।
त्वां पादयुग्मग्रहणेन कुर्वन्
अधःशिरस्कां निरगाद् गृहान्तात्॥11॥

स पोथयामास शिलातले त्वाम्
सद्यः समुत्पत्य करादमुष्य।

तेनैव ते शौरिसुतत्वमाप्ता
हताश्च कम्सेन तु जातमात्राः।
श्रीनारदेनर्षिवरेण देवि
ज्ञातं पुरावर्त्तमिदं समस्तम्॥2॥

प्राग् दम्पती चादितिकश्यपौ हा
स्वकर्मदोषेण पुनश्च जातौ।
तौ देवकी शूरसुतौ स्वपुत्र–
नाशादिभिर् दुखमवापतुश्च॥3॥

त्वं देवकीसप्तमगर्भतो वै
गृह्णन्त्यनन्तांशशिशुं स्वशक्त्या।
निवेश्य रोहिण्युदरे धरण्याम्
मर्त्यो भवेत्यच्युतमादिशश्च॥4॥

प्राक् कर्मदोषात् स सुहृन् मघोनः
क्रुद्धेन शप्तो भृगुणा मुरारिः।
दयार्हसम्सारिदशामवाप्स्यन्
हा देवकी गर्भमथाऽऽविवेश॥5॥

पूर्णे तु गर्भे हरिरर्द्धरात्रे
कारागृहे देवकनन्दनायाः।
जज्ञे सुतेष्वष्टमतामवाप्तः
शौरिर्विमुक्तो निगडैश्च बन्धात्॥6॥

त्वं व्योमवाणीं स्मर देवकस्य
पुत्र्याः सुतेष्वष्टमतां गतः सन् ।
स त्वां निहन्ता हरिरेव शत्रु–
रल्पोऽपि नोपेक्ष्य इतीर्यते हि॥9॥

सर्वात्मजानां नृप मेळनेऽस्याः
सर्वेऽष्टमाः स्युः प्रथमे च सर्वे ।
मायाविनं विद्धि हरिम् सदेति
गते मुनौ क्रोधमियाय कंसः॥10॥

स देवकीसूनुमरं जघान
कारागृहे तां पतिमप्यबध्नात्।
तयोः सुतान् षट् खलु जातमात्रान्
हत्वा कृतं स्वं हितमेव मेने॥11॥

कायेन वाचा मनसेन्द्रियैर् वा
मा जातु पापं करवाणि देवि।
ममास्तु सत्कर्मरतिः प्रियस्ते
भवानि भक्तं कुरु मां नमस्ते॥12॥

---

दशकम्–21
नन्दसुतावतारम्

सर्वेऽपि जीवा निजकर्मबद्धा
एते षडासन्द्रुहिणस्य पौत्राः।
तन्निन्दया दैत्यकुले प्रजाताः
पुनश्च शप्ता जनकेन दैवात्॥1॥

यूयं च साहाय्यममुष्य कर्तु-
मम्शेन देवा दयितासमेताः।
जायेध्वमूर्व्यां जगतोऽस्तु भद्र-
मेवं विनिर्दिश्य तिरोदधाथ ॥9॥

विचित्रदुष्टासुरभावभार-
निपीडितं मे हृदयं महेशि ।
अत्रावतीर्येदमपाकुरु त्वम्
माता हि मे ते वरदे नमोऽस्तु॥10॥

---------------

## दशकम्-20
## देवकीपुत्रवधम्

अथोरुपुण्ये मथुरापुरे तु
विभूषिते मौक्तिकमालिकाभिः।
श्रीदेवकीशौरिविवाहरङ्गे
सर्वैः श्रुतं व्योम वचः स्फुटार्थम्॥1॥

अवेहि भो देवकनन्दनायाः
सुतोऽष्टमः कंस तवान्तकः स्यात्।
श्रुत्वेति तां हन्तुमसिम् दधानः
कंसो निरुद्धो वसुदेवमुख्यैः॥2॥

अथाऽऽह शौरिः शृणु कंस पुत्रान्
ददामि तेऽस्याः शपथं करोमि ।
एतद् वचो मे व्यभिचर्यते चेन्-
मत्पूर्वजाता नरके पतन्तु ॥3॥

श्रद्धाय शौरेर् वचनं प्रशान्त-
स्तां देवकीं भोजपतिर् मुमोच ।
सर्वे च तुष्टा यदवो नगर्याम्
तौ दंपती चोषतुरात्तमोदम् ॥4॥

काले सती पुत्रमसूत तातः
कंसाय निश्शङ्कमदात् सुतं स्वम् ।
हन्ता न मेऽयं शिशुरित्युदीर्य
तं प्रत्यदात् भोजपतिश्च तस्मै ॥5॥

अथाऽऽशु भूभार विनाशनाख्य-
त्वन्नाटकप्रेक्षणकौतुकेन ।
श्रीनारदः सर्व विदेत्य कंस-
मदृश्यहासं सकलं जगाद॥6॥

त्वं भूप दैत्यः खलु कालनेमिर्
जगत्प्रसिद्धो हरिणा हतश्च ।
ततोऽत्र जातोऽसि सुरा हरिश्च
त्वां हन्तुमिच्छन्त्यधुनाऽपि शत्रुम् ॥7॥

देवास्तदर्थं नररूपिणोऽत्र
व्रजे च जाता वसुदेवमुख्याः।
नन्दादयश्च त्रिदशा इमे न
विसृम्भणीया न च बान्धवास्ते ॥8॥

नृसिम्हभावादतिभीकरत्वम्
हयाननत्वात् परिहास्यतां च ॥3॥

जातः पुनर्दाशरथिश्च दुखाद्
दुखं गतोऽहं विपिनान्तचारी ।
राज्यं च नष्टं दयिता हृता मे
पिता मृतो हा प्ळवगाः सहायाः॥4॥

कृत्वा रणं भीममरिम् निहत्य
पत्नीं च राज्यं च पुनर् गृहीत्वा।
दुष्टापवादेन पतिव्रतां तां
विहाय हा दुर्यशसाऽभिषिक्तः॥5॥

यदि स्वतन्त्रोऽस्मि ममैवमार्त्तिर्
न स्याद् वयं कर्मकलापबद्धाः।
सदाऽपि मायावशगा स्ततोऽत्र
मायाधिनाथां शरणं व्रजामः ॥6॥

इतीरितैर् भक्तिविनम्रशीर्षैर्
निमीलिताक्षैर् विबुधैः स्मृता त्वम् ।
प्रभातसन्ध्येव जपासुमाङ्गी
तमोनिहन्त्री च पुरः स्थिताऽऽत्थ ॥7॥

जाने दशां वो वसुदेवपुत्रो
भूत्वा हरिर्दुष्टजनान् निहन्ता ।
तदर्थशक्तीरहमस्य दद्या-
मंशेन जायेय च नन्दपुत्री ॥8॥

श्रुत्वा तवोक्तिं स हनूमदाद्यैः
साकं कपीन्द्रैः कृतसेतुबन्धः।
लङ्कां प्रविष्टो हतरावणाद्यः
पुरीमयोध्यामगमत् ससीतः ॥13॥

हा देवि भक्तिर् नहि मे गुरुश्च
न चैव वस्तुग्रहणे पटुत्वम् ।
सत्संगतिश्चापि न ते पतन्तु
कृपाकटाक्षा मयि ते नमोऽस्तु ॥14॥

-----------------

दशकम् 19
भूम्याः दुखम्

पुरा धरा दुर्ज्जनभारदीना
समं सुरभ्या विबुधैश्च देवि ।
विधिं समेत्य स्वदशामुवाच
स चानयत् क्षीरपयोनिधिं तान्॥1॥

स्तुतो हरिः पद्मभवेन सर्वम्
ज्ञात्वाऽखिलान् साञ्जलिबन्धमाह।
ब्रह्मन् सुरा नैव वयं स्वतन्त्रा
दैवं बलीयः किमहं करोमि॥2॥

दैवेन नीतः खलु मत्स्यकूर्म –
कोलादिजन्मान्यवशोऽहमाप्तः।

विमातृवाक्योज्झितराज्यभोगो
रामः ससीतः सहलक्ष्मणश्च ।
चरन् जटावल्कलवानरण्ये
गोदावरीतीरमवाप देवि ॥2॥

तं वञ्चयन् रावण एत्य मायी
जहार सीतां यतिरूपधारी ।
रामस्य पत्नीविरहातुरस्य
श्रुत्वा विलापं वनमप्यरोदीत् ॥3॥

श्रीनारदोऽभ्येत्य जगाद रामम्
किं रोदिषि प्राकृतमर्त्यतुल्यः।
त्वं रावणं हन्तुमिहावतीर्णो
हरिः कथं विस्मरसीदमार्य ॥4॥

कृते युगे वेदवतीति कन्या
हरिम् श्रुतिज्ञा पतिमाप्तुमैच्छत्।
सा पुष्करद्वीपगता तदर्थ-
मेकाकिनी तीव्रतपश्चकार ॥5॥

श्रुता तयाऽभूदशरीरिवाक्-तें
हरिः पतिर्भाविनि जन्मनि स्यात् ।
निशम्य तद् हृष्टमनास्तथैव
कृत्वा तपस्तत्र निनाय कालम् ॥6॥

तां रावणः कामशरार्दितः सम्-
श्चकर्ष सा च स्तवनेन देवीम् ।

प्रसाद्य कोपारुणलोचनाभ्याम्
निरीक्ष्य तं निश्चलमाततान ॥7॥

शशाप तं च त्वमरे मदर्थे
सबान्धवो राक्षस नम्क्ष्यसीति ।
स्वं कौणपस्पृष्टमशुद्धदेहम्
योगेन सद्यो विजहौ सती सा ॥8॥

जाता पुनः सा मिथिलेशकन्या
काले हरिम् त्वां पतिमाप दैवात्।
स हन्यतां सत्वरमाशरेन्द्र-
स्तन्नाशकालस्तु समागतश्च ॥9॥

तदर्थमाराधय लोकनाथाम्
नवाहयज्ञेन कृतोपवासः।
प्रसाद्य तामेव सुरा नराश्च
कामान् लभन्ते शुभमेव ते स्यात् ॥10॥

इत्यूचिवांसं मुनिमेव राम
आचार्यमाकल्प्य सलक्ष्मणस्त्वाम् ।
सम्पूज्य सुस्मेरमुखीं व्रतान्ते
सिम्हाधिरूढां च पुरो ददर्श ॥11॥

भक्त्या नतं तं द्रुतमात्थ राम
हरिस्त्वमम्शेन मदाज्ञयैव ।
जातो नरत्वेन दशास्यहत्यै
ददामि तच्छक्तिमहं तवेह ॥12॥

राज्ये त्वदीयं गृहमाशु कृत्वा
पूजाविधानादि च सम्वृधत्त ॥8॥

तस्मिन् नृपे त्वत्सदनानि कृत्वा
जनाः प्रतिग्राममपुजयंस्त्वाम् ।
काश्यां सुबाहुश्च तथाऽकरोत् ते
सर्वत्र पेतुः करुणाकटाक्षाः ॥9॥

न कर्मणा न प्रजया धनेन
न योगसांख्यादिविचिन्तया च ।
न च व्रतेनापि सुखानुभूतिर्
भक्त्यैव मर्त्यः सुखमेति मातः॥10॥

नाहं सुबाहुश्च सुदर्शनश्च
न मे भरद्वाजमुनिः शरण्यः।
गुरुः सुहृद् बन्धुरपि त्वमेव
महेश्वरि त्वां सततं नमामि॥11॥

---

## दशकम्–18
## रामकथा

सूर्यान्वये दाशरथी रमेशो
रामाभिधोऽभुद् भरतोऽथ जातः।
ज्येष्ठानुवर्त्ती खलु लक्ष्मणश्च
शत्रुघ्ननामाऽपि जगद्विधात्रि ॥1॥

या राजसीदं सृजतीव शक्तिर्
या सात्विकी पालयतीव विश्वम् ।
या तामसी सम्हरतीव सर्वम्
सद् वस्तु सैवान्यदसत् समस्तम् ॥3॥

भक्तार्त्तिहन्त्री करुणामयी सा
भक्तद्रुहां भीतिकरी प्रकामम् ।
वसन् भरद्वाजतपोवनान्ते
चिराय मात्रा सह तां भजेऽहम् ॥4॥

तामेव भक्त्या भजतेह भुक्ति-
मुक्तिप्रदामस्तु शुभं सदा वः।
श्रुत्वेदमानम्रमुखा स्तथे ति
सम्मन्त्र्य भूपाश्च ततो निवृत्ताः॥5॥

सुदर्शनो मातृवधूसमेतः
सुबाहुमापृछ्य रथाधिरूढः ।
पुरीमयोध्यां प्रविशन् पुरेव
सीतापतिस्तोषयति स्म सर्वान् ॥6॥

लीलावतीं प्राप्य विमातरं च
नत्वा विषण्णां हतपुत्रताताम् ।
सदुक्तिभिः कर्मगतीः प्रबोध्य
स सान्त्वयामास महेशि भक्तः॥7॥

जनेषु पश्यत्सु सुदर्शनोऽत्र
त्वां पूजयित्वा गुरुणाऽभिषिक्तः ।

बालोऽयमित्येष मयाऽऽश्रमे प्रा-
गुपेक्षितः सोऽत्र रिपुत्वमेति ।
माऽयं च वध्वा व्रियतां वृतश्चेद्
हन्यामिमं तां च हरेयमाशु ॥5॥

श्रुत्वा युधाजिद्वचनं नृपाला
हितैषिणः केचिदुपेत्य सर्वम् ।
सुदर्शनं प्रोचुरथापि धीरः
स निर्भयो नैव चचाल देवि ॥6॥

एकत्र पुत्री च सुदर्शनश्च
युधाजिदन्यत्र बली सकोपः।
तन्मध्यगो मम्क्षु नृपः सुबाहुर्
बद्धाञ्जलिः प्राह नृपान् विनम्रः ॥7॥

नृपा वचो मे श्रृणुतेह बाला
नाऽऽयाति पुत्री मम मण्डपेऽत्र ।
तत् क्षम्यतां श्वोऽत्र नयास्यहं ताम्
याताद्य वो विश्रममन्दिराणि ॥8॥

गतेषु सर्वेषु सुदर्शनस्तु
त्वां सम्स्मरन् मातृहितानुसारी ।
सुबाहुना तन्निशि तेन दत्ताम्
वधूं यथाविध्युदुवाह देवि ॥9॥

प्रातर् युधाजित् प्रबलो विवाह-
वार्तां निशम्याऽऽत्तरुषा ससैन्यः।

सुदर्शनं मातृवधूसमेतम्
यात्रोन्मुखं भीमरवो रुरोध॥10॥

ततो रणे घोरतरे सुबाहुः
क्ळीं क्ळीमितीशानि समुच्चचार ।
तत्राऽऽविरासीः समराङ्कणे त्वम्
सिम्हाधिरूढा स्वजनार्तिहन्त्री ॥11॥

त्वन्नाम गायन् कथयन् गुणास्ते
त्वां पूजयम्श्चात्र नयामि कालम् ।
स्वप्नेऽपि दृष्टा न मया त्वमम्बे
कृपां कुरु त्वं मयि ते नमोऽस्तु॥12॥

---

## दशकम् 17
## सुदर्शनकोसलप्राप्ति

युधाजितं शत्रुजितं च हत्वा
रणाङ्कणस्था नुतिभिः प्रसन्ना ।
सुबाहुमुख्याननुगृह्य भक्तान्
सर्वेषु पश्यत्सु तिरोदधाथ ॥1॥

पृष्टो नृपान् प्राह सुदर्शनस्तान्
दृष्टा भवद्भिः खलु सर्वशक्ता ।
या निर्गुणा योगिभिरप्यदृश्या
दृश्या च भक्तैः सगुणा विनीतैः ॥2॥

ऐश्वर्यमाशु लभतेऽपि च मुक्तिमेति
त्वद्भक्तिमेव मम देहि नमो जनन्यै॥10॥

-------------------

## दशकम्–16
## सुदर्शनविवाहम्

श्रुत्वा वधूवाक्यमरं कुमारो
हृष्टो भरद्वाजमुनिं प्रणम्य ।
आपृछ्य मात्रा सह देवि स त्वाम्
स्मरन् रथेनाऽऽप पुरं सुबाहोः ॥1॥

स्वयम्वराहूतमहीभुजां स
सभां प्रविष्टो हतभीर् निषण्णः।
कन्या कला पूर्णशशी त्वसावि–
त्याहुर् जनास्तावभिवीक्षमाणाः॥2॥

वधूश्च तद्दर्शन वर्धितानु–
रागा स्मरन्ती तव वाक्यसारम्।
सभां नृपाणामजितेन्द्रियाणाम्
न प्राविशत् सा पितृचोदिताऽपि ॥3॥

शङ्काकुलास्ते नृवरा बभूवु–
रुच्चैर् युधाजित् कुपितो जगाद–।
मा दीयतां लोकहितानभिज्ञा
वधूरशक्ताय सुदर्शनाय ॥4॥

स्वप्ने त्वया शशिकला कथिताऽस्ति भार–
द्वाजाश्रमे प्रथितकोसलवम्शजातः ।
धीमान् सुदर्शन इति ध्रुवसन्धिपुत्र
एनं पतिं वृणु तवास्तु शुभं सदेति ॥5॥

स्वप्नानुभूतमनृतं किमृतं न वेति
सुप्तोत्थिता तु मतिमत्यपि न व्यजानात् ।
पृष्टात् सुदर्शनकथां सुमुखी द्विजात् सा
सृत्वाऽनुरक्तहृदयैव बभूव देवि ॥6॥

ज्ञात्वा सुबाहुरिदमाकुलमानसस्ता–
मस्मान्निवर्त्तयितुमाशु सहेष्टपत्न्या ।
कृत्वा प्रयत्नमखिलं विफलं च पश्य–
न्निच्छास्वयम्वरविधिं हितमेव मेने ॥7॥

कश्चित् कदाचन सुदर्शनमेत्य विप्रः
प्राहाऽऽगतः शशिकलावचसाऽहमत्र ।
सा त्वां ब्रवीति–नृपपुत्र जगज्जनन्या
वाचा वृतोऽसि पतिरस्मि तवैव दासी ॥8॥

अत्राऽऽगता नृपतयो बहवस्त्वमेत्य
तेषां सुधीर मिषतां नय मां प्रियां ते ।
एवं वधूवचन मानय तां सुशीलाम्
भद्रं तवास्त्विदमुदीर्य जगाम विप्रः ॥9॥

स्वप्ने च जाग्रति च पश्यति भक्तवर्य–
स्त्वां सन्ततं तव वचो मधुरं शृणोति।

राज्येऽभिषिक्तः खलु शत्रुजित् स
बालस्ततोऽयं रिपुभिद् युधाजित्।
दौहित्रराज्यं सुखमेकनाथः
शशास वज्रीव दिवं महेशि ॥7॥

पत्युः पितुश्चापि मृतेरनाथा
भीता विदळ्ळाभिधमन्त्रियुक्ता।
मनोरमा बालसुता त्वरण्ये
ययौ भरद्वाजमुनिं शरण्यम् ॥8॥

तपोनिधिर् दीनजनानुकम्पी
ज्ञात्वा मुनिस्तां ध्रुवसन्धिपत्नीम्।
उवाच– वत्से वस निर्भयैव
तपोवनेऽत्रास्तु शुभं तवेति॥9॥

अल्पोऽप्युपेक्ष्यो न रिपुर् न रोगोऽ–
प्येवं स्मरन्नाशु नृपो युधाजित् ।
तां हर्तुकामः ससुतां महर्षेः
प्रापाऽऽश्रमम् मन्त्रिवरेण साकम् ॥10॥

न मानितस्तेन तपस्विना स
मनोरमां नैव सुतं च लेभे ।
प्रहर्तुकामोऽपि मुनिं स मन्त्रि–
वाचा निवृत्तः श्रुतकौशिकोऽभूत् ॥11॥

एवं मुनिस्तां ससुतां ररक्ष
भीतोऽस्मि संसारयुधाजितोऽहम् ।

न मे सहायोऽस्ति विना त्वयैष
सनूपुरं ते चरणं नमामि ॥12॥

-----------

दशकम् –15
सुदर्शनकथा {देवीदर्शनम्}

एवं तवैव कृपया मुनिवर्यशीत–
च्छायाश्रितो हतभयः स सुदर्शनोऽयम् ।
वेदध्वनिश्रवणपूतहृदाश्रमान्ते
सम्मोदयन् मुनिजनान् ववृधे कुमारः ॥1॥

आबाल्यमेष मुनिबालकसंगमेन
क्लीं क्लीमितीश्वरि सदा तव बीजमन्त्रम् ।
तत्रोच्चचार कृपयाऽस्य पुरः कदाचि–
दाविर्बभूविथ नतं तमभाषथाश्च ॥2॥

प्रीताऽस्मि ते सुत जगज्जननीमवेहि
मां सर्वकामवरदां तव भद्रमस्तु ।
चन्द्राननां शशिकलां विमलां सुबाहोः
काशीश्वरस्य तनयां विधिनोद्वह त्वम् ॥3॥

नष्टा भवेयुरचिरेण तवारिवर्गा
राज्यं च यैरपहृतं पुनरेष्यसि त्वम् ।
मातृद्वयेन सचिवैश्च समं स्वधर्मान्
कुर्याः सदेति समुदीर्य तिरोदधाथ ॥4॥

मनोरमाऽसूत सुदर्शनाख्यम्
कुमारकं शत्रुजितं च साऽन्या।
सम्वर्धयंस्तौ मृगयाविहारी
वने नृपो हा हरिणा हतोऽभूत् ॥2॥

विचिन्तयन् राजकुलस्य वृत्तम्
तज्ज्येष्ठपुत्रस्य सुदर्शनस्य ।
राज्याभिषेकाय गुरुर्वसिष्ठ-
श्चकार मन्त्रं सचिवैः समेतः॥3॥

मातामहः शत्रुजितो युधाजि-
दभ्येत्य सद्योऽमितवीर्यशाली ।
राज्ये स्वदौहित्रमिहाभिषिक्तम्
कर्तुं कुबुद्धिः कुरुतेस्म यत्नम् ॥4॥

मनोरमाया अपि वीरसेनः
पिताऽभ्युपेत्याऽऽशु रुरोध तस्य ।
यत्नम् बली स्वस्वसुतासुताभि-
षेकैकबुद्धी खलु तावभुताम् ॥5॥

कृत्वा विवादं च ततो नृपौ द्वौ
घोरं रणं चक्रतुरिद्धरोषौ ।
युधाजिता तत्र तु वीरसेनो
दैवाद् हतोऽभूद् हरिणा करीव ॥6॥

दृष्टस्त्वया चेद् वद सूकरः क्व
गतो न वाऽदृश्यत किं मुनीन्द्र।
अहं निषादः खलु वन्यवृत्तिर्
ममास्ति दारादिकपोष्यवर्गः ॥2॥

श्रुत्वा निषादस्य वचो मुनिः स
तूष्णीं स्थितश्चिन्तयति स्म गाढम्।
वदामि किं दृष्ट इतीर्यते चेद्
हन्यादयं तं मम चाप्यघं स्यात् ॥3॥

सत्यं नरं रक्षति रक्षितं चे-
दसत्यवक्ता नरकं व्रजेच्च ।
सत्यं हि सत्यं सदयं न किञ्चित्
सत्यं कृपाशून्यमिदं मतं मे ॥4॥

एवं मुनेश्चिन्तयतः स्वकार्य-
व्यग्रो निषादः पुनरेवमूचे ।
दृष्टस्त्वया किं स किटिर् न किं वा
दृष्टः स शीघ्रं कथयात्र सत्यम् ॥5॥

मुनिस्तमाहात्र पुनः पुनः किम्
निषाद मां पृच्छसि मोहमग्नः।
पश्यन् न भाषेत न च ब्रुवाणः
पश्येदलं वाग्भिरवेहि सत्यम् ॥6॥

उन्मादिनो जल्पनमेत देवम्
मत्वा निषादः सहसा जगाम ।
नासत्यमुक्तं मुनिना न कोलो
हतश्च सर्वं तव देवि लीलाः ॥7॥

द्रष्टा परं ब्रह्म तदेव च स्या–
दिति श्रुतिः प्राह न भाषते सः।
सदा ब्रुवाणस्तु न पश्यतीद–
मयं हि सत्यव्रतवाक्यसारः ॥8॥

भूयः स सारस्वतबीजमन्त्रम्
चिरं जपन् ज्ञाननिधिः कविश्च।
वाल्मीकिवत् सर्वदिशि प्रसिद्धो
बभूव बन्धून् समतर्पयच्च ॥9॥

स्मृता नता देवि सुपूजिता वा
श्रुता नुता वा खलु वन्दिता वा।
ददासि नित्यं हितमाश्रितेभ्यः
कृपार्द्रचित्ते सततं नमस्ते ॥10॥

-------------

दशकम् –14
सुदर्शनकथा – भरद्वाजाश्रमप्रवेशम्

राजा पुराऽऽसीत् किल कोसलेषु
धर्मैकनिष्ठो ध्रुवसन्धिनामा।
आस्तां प्रिये अस्य मनोरमा च
लीलावती चेति दृढानुरक्ते ॥1॥

इत्यादि सञ्चिन्त्य वने स्थितः स
कदाचिदेकं रुधिराप्लुताङ्गम्।
बीबत्सरूपं किटिमेष पश्य-
न्नय्यय्य इत्युत्स्वनमुच्चचार ॥8॥

शरेण विद्धः स किरिर् भयार्त्तः
प्रवेपमानो मुनिवासदेशे।
अन्तर् निकुञ्जस्य गतश्च दैवा-
ददृश्यतामाप भयार्त्तिहन्त्रि ॥9॥

विना मकारं च विना च भक्ति-
मुच्चार्य वाग्भीजमनुं पवित्रम्।
प्रसन्नबुद्धिः कृपया तवैष
बभूव दूरीकृतसर्वपापः ॥10॥

नाहं कविर् गानविचक्षणो न
नटो न शिल्पादिषु न प्रवीणः।
पश्यात्र मां मूढमनन्यबन्धुम्
प्रसन्नबुद्धिं कुरु मां नमस्ते ॥11॥

---

## दशकम् 13
## उतथ्यमहिम

अथाऽऽगतः कश्चिदधिज्यधन्वा
मुनिं निषादः सहसा जगाद-।
त्वं सत्यवाग् ब्रूहि मुने त्वया किम्
दृष्टः किटिः सायकविद्धदेहः ॥1॥

सर्वत्र तद् वर्णय विस्तरेण
विधत्स्व भक्तिं हृदये जनानाम् ॥9॥

इतीरितोऽजेन मुनिः प्रसन्न–
स्तव प्रभावं करुणार्द्रचित्ते ।
व्यासं तथाऽन्यांश्च यथोचितं स
प्रबोधयामास पवित्रवाग्भिः ॥10॥

न मे गुरुस्त्वच्चरितस्य वक्ता
न मे मतिस्त्वत्स्मरणैकसक्ता ।
अवाच्यवक्ताऽहमकार्यकर्त्ता
नमामि मातश्चरणाम्बुजं ते ॥11॥

---------------

## दशकम् 12
## उतथ्यजननम्

पुरा द्विजः कश्चन देवदत्तो
नाम प्रजार्त्थं तमसासमीपे ।
कुर्वन् मखं गोभिलशापवाचा
लेभे सुतं मूढमनन्तदुःखः ॥1॥

उतथ्यनामा ववृधे स बालो
मूढस्तु दृष्टं न ददर्श किञ्चित् ।
श्रुतं न शुश्राव जगाद नैव
पृष्टो न च स्नानजपादि चक्रे ॥2॥

इतस्ततोऽटन् समवाप्तगङ्गो
जले निमज्जन् प्रपिबंस्तदेव ।
वसन् मुनीनामुटजेषु वेद–
मन्त्रांश्च शृण्वन् स दिनानि निन्ये ॥3॥

क्रमेण सत्सङ्गविवृद्धसत्वः
सत्यव्रतः सत्यतपाश्च भूत्वा ।
नासत्यवाक् त्वत्कृपया स मूढोऽ–
प्युन्मीलितान्तर्नयनो बभूव ॥4॥

कुलं पवित्रं जननी विशुद्धा
पिता च सत्कर्मरतः सदा मे ।
मया कृतं नैव निषिद्धकर्म
तथाऽपि मूढोऽस्मि जनैश्च निन्द्यः ॥5॥

जन्मान्तरे किं नु कृतं मयाऽघम्
किं वा न विद्याऽर्थिं जनस्य दत्ता।
ग्रन्थोऽप्यदत्तः किमु पूज्यपूजा
कृता न किं वा विधिवन् न जाने ॥6॥

नाकारणं कार्यमितीर्यते हि
दैवं बलिष्ठं दुरतिक्रमं च ।
ततोऽत्र मूढो विफलीकृतोऽस्मि
वन्ध्यद्रुवन्निर्जलमेघवच्च ॥7॥

सर्वं तदा वास्यमितं जगत् सा
जाता न सर्वं तत एव जातम् ।
तत्रैव सर्वं च भवेत् प्रलीनम्
सैवाखिलम् नास्ति च किञ्चनान्यत् ।।4।।

गौणानि चान्तःकरणेन्द्रियाणि
सा निर्गुणाऽवाङ्मतिगोचरा च ।
सा स्तोत्रमन्त्रैः सगुणा महद्भिः
सम्स्तूयते भक्तविपन्निहन्त्री ।।5।।

सुधासमुद्रे वसतीयमार्या
द्वीपे विचित्राद्भुतशक्तियुक्ता ।
सर्वं जगद् यद् वशगं वयं च
त्रिमूर्त्तयो नाम यदाश्रिताः स्मः।।6।।

तद्दत्तशक्तित्रयमात्रभाज–
स्त्रिमूर्त्तयः पुत्र वयं विनीताः ।
तदाज्ञया साधु सदाऽपि कुर्मो
ब्रह्माण्डसर्गस्थितिसम्हृतीश्च ।।7।।

दैवेन मूढं कविमातनोति
सा दुर्बलं तु प्रबलं करोति ।
पम्गुं गिरिं लंघयते च मूकम्
कृपावती चाऽऽतनुते सुवाचम् ।।8।।

यत् किञ्चिदज्ञायि मया महत्त्वम्
देव्या स्तदुक्तं तव संग्रहेण ।

नवाक्षरं मन्त्रमुदीरयन्ती
बद्धाञ्जलींस्तान् स्मितपूर्वमात्थ ॥4॥

ब्रह्मन् हरे रुद्र मदीयशक्ति-
त्रयेण दत्तेन सुखं भवन्तः ।
ब्रह्माण्डसर्गस्थितिसंहृतीश्च
कुर्वन्तु मे शासनया विनीताः ॥5॥

मान्या भवद्भिः खलु शक्तयो मे
स्यात् शक्तिहीनं सकलं विनिन्द्यम् ।
स्मरेत मां सन्ततमेवमुक्त्वा
प्रस्थापयामासिथ तांस्त्रिमूर्तीन् ॥6॥

नत्वा त्रयस्ते भवतीं निवृत्ताः
पुंस्त्वं गता आरुरुहुर् विमानम् ।
सद्यस्तिरोधाः स सुधासमुद्रो
द्वीपो विमानश्च तिरोबभूवुः ॥7॥

एकार्णवे पङ्कजसन्निधौ च
हतासुरे ते खलु तस्थिवांसः ।
दृष्टं नु सत्यं किमु बुद्धिमोहः
स्वप्नो नु किं वेति च न व्यजानन् ॥8॥

ततस्त्रयस्ते खलु सत्यलोक-
वैकुण्ठकैलासकृताधिवासाः ।
ब्रह्माण्डसृष्ट्यादिषु दत्तचित्ता-
स्त्वां सर्वशक्तामभजन्त देवि ॥9॥

सुधासमुद्रं तरळोर्म्मिमालम्
स्थानं मणिद्वीपमनोपमं ते ।
मञ्चे निषण्णां भवतीं च चित्ते
पश्यानि ते देवि नमः प्रसीद ॥10॥

---

## दशकम् 11
### ब्रह्मनारदसंवादम्

श्रीनारदः पद्मजमेकदाऽऽह
पितस्त्वया सृष्टमिदं जगत् किम् ।
किं विष्णुना वा गिरिशेन वा कि-
मकर्त्तृकं वा सकलेश्वरः कः ॥1॥

इतीरितोऽजः सुतमाह साधु
पृष्टं त्वया नारद मां शृणु त्वम् ।
विभाति देवी खलु सर्वशक्ति-
स्वरूपिणी सा भुवनस्य हेतुः॥2॥

एकं परं ब्रह्म सदद्वितीय-
मात्मेति वेदान्तवचोभिरुक्ता ।
न सा पुमान् स्त्री च न निर्गुणा सा
स्त्रीत्वं च पुंस्त्वं च गुणैर् दधाति ॥3॥

आयाम्यहं चित्तनिरोधरूप-
विमानतस्ते पदमद्वितीयम् ।
न केनचिद् रुद्धगतो भवानि
त्वामेव मातः शरणं व्रजामि ॥11॥

-----------------

दशकम् 10
शक्तिप्रदानम्

ततो विमानादजविष्णुरुद्रा-
स्त्वद् गोपुरद्वार्यवरुह्य सद्यः ।
स्त्रियः कृता देवि तवेच्छयैव
सविस्मयास्त्वन्निकटं समीयुः ॥1॥

कृतप्रणामास्तव पादयुग्म-
नखेषु विश्वं प्रतिबिम्बितं ते ।
विलोक्य साश्चर्यममोघवाग्भिः
पृथक् पृथक् तुष्टुवुरम्बिके त्वाम् ॥2॥

नुतिप्रसन्ना निजसर्गशक्तिम्
महासरस्वत्यभिधामजाय ।
रक्षार्थशक्तिं हरये महाल-
क्ष्म्याख्यां च लीलानिरते ददाथ ॥3॥

गौरीं महाकाळ्यभिधां च दत्वा
संहारशक्तिं गिरिशाय मातः ।

## दशकम् –9
## भुवनेश्वरी दर्शनम्

एकार्णवेऽस्मिन् जगति प्रलीने
दैत्यौ हरिर् ब्रह्मवधोद्यतौ तौ ।
जघान देवि त्वदनुग्रहेण
त्वदिच्छयैवाऽऽगमदत्र रुद्रः ॥1॥

एको विमानस्तरसाऽऽगतः खात्
त्रिमूर्त्यविज्ञातगतिस्त्वदीयः।
त्वत्प्रेरिता आरुरुहु स्तमेते
स चोत्पतन् व्योम्नि चचार शीघ्रम् ॥2॥

वैमानिकाश्चोद्गतयः सशक्रम्
दिवं सपद्मोद्भवसत्यलोकम् ।
सरुद्रकैलासममी सविष्णु
वैकुण्ठमप्युत्पुळका अपश्यन् ॥3॥

अदृष्टपूर्वनितरांस्त्रिमूर्त्तीन्
स्थानानि तेषामपि दृष्टवन्तः।
त्रिमूर्त्तयस्ते च विमोहमापुः
प्राप्तो विमानश्च सुधासमुद्रम् ॥4॥

त्वद्भ्रूलतालोलतरंगमालम्
त्वदीयमन्दस्मितचारुफेनम् ।
त्वन्मञ्जुमञ्जीरमृदुस्वनाढ्यम्
त्वद्पादयुग्मोपमसौख्यदं च ॥5॥

तन्मध्यतस्ते ददृशुर् विचित्र-
प्राकारनानाद्रुलतापरीतम् ।
स्थानं मणिद्वीपमदृष्टपूर्वम्
क्रमात् शिवे त्वां च सखीसमेताम् ॥6॥

ज्ञात्वा द्रुतं त्वां हरिराह धात-
स्त्रिनेत्र धन्या वयमद्य नूनम् ।
सुधासमुद्रोऽयमनल्पपुण्यैः
प्राप्या जगन्मातृनिवासभूमिः ॥7॥

सा दृश्यते रागिजनैरदृश्या
मञ्चे निषण्णा बहुशक्तियुक्ता ।
एषैव दृक् सर्वमिदं च दृश्य-
महेतुरेषा खलु सर्वहेतुः ॥8॥

बालः शयानो वटपत्र एक
एकार्णवेऽपश्यमिमां स्मितास्याम् ।
ययैव मात्रा परिलाळितोऽह-
मेनां समस्तार्त्तिहरां व्रजेम ॥9॥

रुध्यामहे द्वारि यदि स्तुवाम-
स्तत्र स्थिता एव वयं महेशीम् ।
इत्यच्युतेनाभिहिते विमान-
स्त्वद्गोपुरद्वारमवाप देवि ॥10॥

अयं हि सर्वश्रुतिशास्त्रसारो
मा विस्मरेमं हृदि रक्षणीयम् ॥7॥

नातः परं ज्ञेयमवेहि किञ्चित्
प्रियोऽसि देव्याःशृणु मे वचस्त्वम् ।
त्वन्नाभिपद्माद् द्रुहिणो भवेत् स
कर्त्ता जगत् पालय तत् समस्तम् ॥8॥

भ्रूमध्यतः पद्मभवस्य कोपाद्
रुद्रो भविष्यन् सकलं हरेच्च ।
देवीं सदा संस्मर तेऽस्तु भद्र-
मेवं निगद्याऽऽशु तिरोदधाथ ॥9॥

हरेरिदं ज्ञानमजस्य लब्ध-
मजात् सुरर्षेश्च ततो ममापि ।
मया त्विदं विस्तरतः सुतोक्तम्
यत् सूरयो भागवतं वदन्ति ॥10॥

देव्या महत्त्वं खलु वर्णयतेऽत्र
यद्भक्तिमात्रस्य गृहे न बन्धः ।
यद्भक्तिहीनस्त्वगृहेऽपि बद्धो
राजाऽपि मुक्तो जनको गृहस्थः ॥11॥

विदेहराजं तमवाप्य पृष्ट्वा
स्वधर्मशङ्काः परिहृत्य धीरः ।
फलेष्वसक्तः कुरु कर्म तेन
कर्मक्षयः स्यात् तव भद्रमस्तु ॥12॥

श्रुत्वेति सद्यः शुक आश्रमात् स
प्रस्थाय वैदेहपुरं समेत्य ।
प्रत्युद्गतः सर्वजनैर् नृपाय
न्यवेदयत् स्वागमनस्य हेतुम् ॥13॥

गृहस्थधर्मस्य महत्त्वमस्माद्
विज्ञाय धीमान् स शुको निवृत्तः ।
पित्राश्रमं प्राप्य सुतां पितॄणाम्
व्यासेऽतिहृष्टे गृहिणीं चकार ॥14॥

उत्पाद्य पुत्रांश्चतुरः सुतां च
गृहस्थधर्मान् विधिनाऽऽचरन् सः ।
प्रदाय चैनां मुनयेऽणुहाय
बभूव काले कृतसर्वकृत्यः ॥15॥

हित्वाऽऽश्रमं तातमपीशशैल–
शृंगे तपस्वी सहसोत्पतन् खे ।
बभौ स भास्वानिव तद्वियोग–
खिन्नं शिवो व्यासमसान्त्वयच्च ॥16॥

सर्वत्र शङ्काकुलमेव चित्तम्
ममेह विक्षिप्तमधीरमार्त्तम् ।
कर्त्तव्यमूढोऽस्मि सदा शिवे माम्
धीरं कुरु त्वं वरदे नमस्ते ॥17॥

----------------

यस्याः प्रसादे सफलं समस्तम्
यदप्रसादे विफलं समस्तम् ।
माहात्म्यमस्या विदितं जगत्सु
मया कृतं भागवतं शृणु त्वम् ॥2॥

विष्णुर् जगत्येकसमुद्रलीने
बालः शयानो वटपत्र एकः ।
स्वबालताहेतुविचारमग्नः
शुश्राव कामप्यशरीरिवाचम् ॥3॥

सनातनं सत्यमहं मदन्यत्
सत्यं न च स्यादहमेव सर्वम् ।
श्रुत्वेदमुन्मीलितदृष्टिरेष
स्मिताननां त्वां जननीं ददर्श ॥4॥

चतुर्भुजा शंखगदारिपद्म-
धरा कृपाद्यैः सह शक्तिजालैः ।
स्थिता जलोपर्यमलाम्बरा त्वम्-
प्रहृष्टचित्तं हरिमेवमात्थ ॥5॥

किं विस्मयेनाच्युत विस्मृताऽहम्
त्वया पराशक्तिमहाप्रभावात् ।
सा निर्गुणा वाङ्मनसोरगम्या
मां सात्विकीं शक्तिमवेहि लक्ष्मीम् ॥6॥

श्रुतस्त्वया यस्त्वशरीरिशब्दो
हिताय ते देव तया स उक्तः ।

केचिज् जगुः केचन वाद्यघोषं
चक्रुश्च नाके ननृतुः स्त्रियश्च ।
वायुर् ववौ स्पर्शसुखः सुगन्धः
शुकोद्भवे सर्वजनाः प्रहृष्टाः ॥2॥

बालः स सद्यो ववृधे सुचेता
बृहस्पतेरात्तसमस्तविद्यः ।
दत्वा विनीतो गुरुदक्षिणां च
प्रत्यागतो हर्षयति स्म तातम् ॥3॥

युवानमेकान्ततपःप्रवृत्तम्
व्यासः कदाचित् शुकमेवमूचे–।
वेदांश्च शास्त्राणि च वेत्सि पुत्र
कृत्वा विवाहं भव सद्गृहस्थः ॥4॥

सर्वाश्रमाणां कवयो विशिष्टा
गृहाश्रमं श्रेष्ठतरं वदन्ति ।
तमाश्रितस्तिष्ठति लोक एष
यजस्व देवान् विधिवत् पितृंश्च ॥5॥

तवास्तु सत्पुत्र ऋणादहं च
मुच्येय मां त्वं सुखिनं कुरुष्व ।
पुत्रः सुखायात्र परत्र च स्यात्
त्वां पुत्र तीव्रैरलभे तपोभिः ॥6॥

किञ्च प्रमाथीनि सदेन्द्रियाणि
हरन्ति चित्तं प्रसभं नरस्य ।

पश्यन् पिता मे जननीं तपस्वी
पराशरोऽपि स्मरमोहितोऽभूत् ॥7॥

य आश्रमादाश्रममेति तत्तत्–
कर्माणि कुर्वन् स सुखी सदा स्यात् ।
गृहाश्रमो नैव च बन्धहेतु–
स्त्वया च धीमन् क्रियतां विवाहः ॥8॥

एवं ब्रुवाणोऽपि शुकं विवाहा–
द्यसक्तमाज्ञाय पितेव रागी ।
पुराणकर्त्ता च जगद् गुरुः स
मायानिमग्नोऽश्रुविलोचनोऽभूत् ॥9॥

भोगेषु मे निस्पृहताऽस्तु मातः
प्रलोभितो मा करवाणि पापम्
मा बाधतां मां तव देवि माया
मायाधिनाथे सततं नमस्ते ॥10॥

------------------

## दशकम् 8
## परमज्ञानोपदेशम्

अथाऽऽह कृष्णः शृणु चिन्तयाऽलम्
गृहाश्रमस्ते न च बन्धकृत् स्यात् ।
बन्धस्य मुक्तेश्च मनो हि हेतुर्
मनोजयार्थं भज विश्वधात्रीम् ॥1॥

मर्त्या मृगाः कृष्ण पतत्रिणश्च
शक्तेर् विधेयाः क इहाविधेयः ॥8॥

प्रत्यक्षमुख्यैर् न च साप्रमाणैर्
ज्ञेया तपोभिः कठिनैर् व्रतैश्च ।
न वेदशास्त्राध्ययनेन चापि
भक्त्यैव जानाति पुमान् महेशीम् ॥9॥

तामेव भक्त्या सततं भजस्व
सर्वार्त्थदां कृष्ण तवास्तु भद्रम् ।
इत्यूचुषि ब्रह्मसुते गते स
व्यासस्तपोर्त्थं गिरिमारुरोह ॥10॥

इहास्मि पर्याकुलचित्तवृत्तिर्
गुरुं न पश्यामि महत्तमं च ।
सन्मार्गतो मां नय विश्वमातः
प्रसीद मे त्वां शरणं व्रजामि ॥11॥

-----------------

दशकम् 7
शुकोत्पत्ति

कृष्णस्य तस्यारणितः शुकाख्य-
स्तव प्रसादादजनिष्ट पुत्रः ।
हृष्टो मुनिर् मंगळकर्म चक्रे
तत्राऽऽदितेया ववृषुः सुमानि ॥1॥

तपः प्रवृत्तः कळविङ्कपोतम्
मात्रा स सम् लाळितमाश्रमान्ते ।
पश्यन्नधन्यामनपत्यतां स्वाम्
सपुत्रभाग्यातिशयं च दध्यौ ॥3॥

सत्पुत्रलाभाय तपश्चिकीर्षु–
स्तीव्रं महामेरुसमीपमेत्य ।
आराधनीयः क इति क्षणं स
चिन्तातुरो लोकगुरुः स्थितोऽभूत् ॥4॥

श्रीनारदस्तत्र समागतस्त्वत्–
कृपा कटाक्षाङ् कुरवन् महर्षिः ।
अर्घ्यादिसंपूजित आसनस्थो
व्यासेन पृष्टः प्रहसन्निवाऽऽह ॥5॥

किं चिन्तया कृष्ण भजस्व देवीम्
कृपावती वाञ्छितदानदक्षा ।
अहेतुरेषा खलु सर्वहेतुर्
निरस्तसाम्यातिशया निरीहा ॥6॥

सैषा महाशक्तिरिति प्रसिद्धा
यदाज्ञया ब्रह्मरमेशरुद्राः ।
ब्रह्माण्डसर्गस्थितिसम्हृतीश्च
कुर्वन्ति काले न च ते स्वतन्त्राः ॥7॥

यस्याश्च ते शक्तिभिरेव सर्व–
कर्माणि कुर्वन्ति सुरासुराद्याः ।

न्यवेदयत् सा गुरवे वसिष्ठा-
यैषा कदाचिन्निजपुंस्त्वकामम् ।
तत्साधनार्थं हरमेव दध्यौ
मुनिः प्रसन्नस्तमुवाच शम्भुः ॥3॥

इळावृतं मा पुरुषः प्रयातु
प्रयाति चेत् सोऽस्त्वबला तदैव।
एवं मया निश्चितमेव सौम्य
गौर्याः प्रसादाय भवान् प्रियो मे ॥4॥

न पक्षभेदोऽत्र ममास्ति गौरी
भवांश्च तृप्तौ भवतां मदीयौ ।
इतः परं तस्य मनोरपत्यम्
मासं पुमान् स्याद् वनिता च मासम्॥5॥

एवं शिवोक्तेन मनोरपत्यम्
लब्ध्वा च पुंस्त्वं धरणीं शशास ।
स्त्रीत्वे च हर्म्येषु निनाय कालम्
जनो न चैनं नृपमभ्यनन्दत् ॥6॥

पुरूरवस्यात्मसुतोऽर्पयित्वा
राज्यं विरक्तो वनमेत्य भूपः।
श्रीनारदात् लब्धनवार्णमन्त्रो
भक्त्या स दध्यौ भवतारिणीं त्वाम्॥7॥

सिम्हाधिरूढाम् अरुणाब्जनेत्राम्
त्वां सुप्रसन्नामभिवीक्ष्य नत्वा ।

स्तुत्वा च भक्त्या स्थिरपुम्स्त्वमेष
लेभेऽथ सायुज्यमवाप चान्ते॥8॥

शौर्यं न वीर्यं न च पौरुषं मे
नैवास्ति च स्त्रीसहजा तितिक्षा।
मूढो न जानाम्यशुभमं शुभं च
देयं त्वया मे शुभमेव मातः॥9॥

पश्यानि मातः प्रवरान् गुरुं स्ते
कारुण्यतो मां सुपथा नयन्तु।
सत्संगसंभावितचित्तवृत्तिर्
भवानि ते देवि नमः प्रसीद ॥10॥

---------------

दशकम् 6
व्यास नारद समागमम्

त्वदिच्छया देवि पुलस्त्यवाचा
पराशराद् विष्णुपुराणकर्तुः ।
मुनेर् हरिर् लोकहिताय दीपाद्
यथा प्रदीपोऽजनि कृष्णनामा ॥1॥

वेदं चतुर्धा विदधत् स कृष्ण-
द्वैपायनो व्यास इति प्रसिद्धः।
वेदान्त सूत्राणि पुराणजालम्
महेतिहासं च महांश्चकार ॥2॥

मध्येरणं द्वौ कृतविश्रमौ युवाम्
एकः करोम्येव निरन्तराहवम् ॥4॥

ज्ञात्वा हरिम् श्रान्तमुभौ विदूरतः
संतस्थतुर् विश्रमसौख्यवांस्ततः ।
त्वामेव तुष्टाव कृपातरंगिणीम्
सर्वेश्वरीं दैत्यजयाय माधवः ॥5॥

देवि प्रसीदैष रणे जितोऽस्म्यहम्
दैत्यद्वयेनाब्जभवं जिघांसुना ।
सर्वं कटाक्षैस्तव साध्यमत्र माम्
रक्षेति वक्तारमभाषथा हरिम् ॥6॥

युद्धं कुरु त्वं जहि तौ मया भृशम्
सम्मोहितौ वक्रदृशेत्ययं त्वया ।
सञ्चोदितो हृष्टमना महार्णवे
तस्थौ रणायाऽऽययतुश्च दानवौ ॥7॥

भूयोपि कुर्व्वन् रणमच्युतो हसन्
कामातुरौ ते मुखपद्मदर्शनात् ।
तावाह तुष्टोऽस्म्यतुलौ रणे युवाम्
ददाम्यहं वां वरमेष वाञ्छितम् ॥8॥

तावूचतुर् विद्धि हरे न याचका-
वावां ददावस्तव वाञ्छितं वरम् ।
नासत्यवाचौ स्व इतीरितो हरि-
स्त्वां संस्मरन् शत्रुजिगीषयाऽब्रवीत् ॥9॥

मह्यं वरं यच्छतमद्य मे यतो
वध्यौ युवाम् स्यातमितीरितावुभौ ।
दृष्ट्वाऽप्सु लीनं सकलं समूचतु-
स्त्वं सत्यवाङ् नौ जहि निर्जले स्थले ॥10॥

अस्त्वेवमित्यादृतवाङ् मुदा हरिः
स्वोरौ पृथावुन्नमिते जलोपरि ।
कृत्वाऽरिणा तच्छिरसी तदाऽच्छिनत्
स्वच्छन्दमृत्यु तव मायया हतौ ॥11॥

द्वेषश्च रागश्च सदा ममाम्बिके
दैत्यौ हृदि स्तोऽत्र विवेकमाधवः ।
आभ्यां करोत्येव रणं जयत्वयम्
तुभ्यं महाकाळि नमः प्रसीद मे ॥12॥

-----------------

दशकम्-5
सुद्युम्नकथा

जाता सुतेळा मनुसप्तमस्य
संप्रार्थितोऽनेन मुनिर्वसिष्ठः ।
शम्भो कटाक्षेण सुतां कुमारम्
चक्रे स कालेन बभूव राजा ॥1॥

सुद्युम्ननामा मृगयाविहारी
गतो हयारूढ इळावृतं सः।
स्त्रीत्वं पुनः प्राप्य सुतं हिमांशोर्
वव्रे पतिम् पुत्रमसूत चैषा ॥2॥

मुञ्चेदमद्यैव न यासि चेत् त्वम्
प्रदर्शय स्वं युधि शौर्यवत्त्वम् ॥4॥

इदं समाकर्ण्य भयाद् विरिञ्चः
सुषुप्तिनिष्पन्दममोघशक्तिम् ।
प्रबोधनार्थं हरिमिद्धभक्त्या
तुष्टाव नैवाचलदंबुजाक्षः ॥5॥

अस्पन्दता त्वस्य कयापि शक्त्या
कृतेति मत्वा मतिमान् विरिञ्चः ।
प्रबोधयैनं हरिमेवमुक्त्वा
स्तोत्रैर् विचित्रैर् भवतीमनौषीत् ॥6॥

नुतिप्रसन्नाऽब्जभवस्य तूर्णम्
निःसृत्य विष्णोः सकलांगतस्त्वम् ।
दिवि स्थिता तत्क्षणमेव देवो
निद्राविमुक्तो हरिरुत्थितोऽभूत् ॥7॥

अथैष भीतं मधुकैटभाभ्याम्
विरिञ्चमालोक्य हरिर् जगाद–।
अलं भयेनाहमिमौ सुरारी –
हन्तास्मि शीघ्रं समरेऽत्र पश्य ॥8॥

एवं हरौ वक्तरि तत्र दैत्यौ
रणोत्सुकौ प्रापतुरिद्धगर्वौ ।
तयोरविज्ञाय बलं मुरारिर्
युद्धोद्यतोऽभूदजरक्षणार्थम् ॥9॥

बिभेमि रागादिमहारिपूभ्यो
जेतुं यतिष्येऽहमिमान् सुशक्तान् ।
तदर्त्थशक्तिं मम देहि नित्यम्
निद्रालसो मा च भवानि मातः ॥10॥

---

दशकम् 4
मधुकैटभवधम्

त्वं तामसी सुप्तरमाधवांगजा
श्यामा रुचा मोहनताम्रलोचना ।
एकाण्र्णवे घोररणोत्सुकान् हरिम्
दैत्यौ च तौ स्मेरमुखी समैक्षथाः ॥1॥

पश्यत्यजे बाहुरणं मुरारिणा
कृत्वा मधुः श्रान्तिमवाप सत्वरम् ।
अभ्येत्य युद्धं कुरुते स्म कैटभः
श्रान्ते च तस्मिन्नकृताऽऽहवं मधुः ॥2॥

एवं मुहुः संगरविश्रमावुभौ
पर्यायतो वर्षसहस्रपञ्चकम् ।
ग्लानिं विना चक्रतुरच्युतः क्लमाद्
विश्रान्तिमिच्छन्नसुरौ जगाद तौ ॥3॥

श्रान्तेन भीतेन च बालकेन च
प्रभुः पुमान् नैव करोति संयुगम् ।

## दशकम् 2
## हयग्रीवकथा

रणेषु दैत्येषु हतेषु देवाः
पुरा प्रहृष्टाः सहदातृशर्वाः ।
यियक्षवो यज्ञपतिं विनीताः
प्रपेदिरे विष्णुमनन्तवीर्यम् ॥1॥

दृष्ट्वा च निद्रावशगं प्रभुं त-
मधिज्यचापाग्र समर्पितास्यं ।
आश्चर्यमापुर्विबुधा न कोपि
प्राबोधयत् तं खलु पापभीत्या ॥2॥

हरेस्तदानीमजसृष्टवम्र्या
मुखार्पणाकुञ्चितचापमौर्वी ।
भग्ना धनुस्चाऽऽर्ज्जवमाप सद्य-
स्तेनाभवत् सोऽपि निकृत्तकण्ठः ॥3॥

कायात् शिरस्तुत्पतितं मुरारेः
पश्यत्सु देवेषु पपात सिन्धौ ।
चेतः सुराणां कदने निमग्नं
हाहेति शब्दः सुमहानभूच्च ॥4॥

किमत्र कृत्यं पतिते हरौ नः
कुर्मः कथंवेति मिथो ब्रुवाणान् ।
देवान् विधाताऽऽह भवेन्न कार्य-
मकारणं दैवमहो बलीयः ॥5॥

ध्यायेत देवीं करुणार्द्रचित्ताम्
ब्रह्माण्डसृष्ट्यादिकहेतुभूताम् ।
सर्वाणि कार्याणि विधास्यते नः
सा सर्वशक्ता सगुणाऽगुणा च ॥6॥

इत्यूचुषः प्रेरणया विधातु-
स्त्वामेव वेदा नुनुवुः सुराश्च ।
दिवि स्थिता देवगणांस्त्वमात्थ
भद्रं भवेद् वो हरिणेदृशेन ॥7॥

दैत्यो हयग्रीव इति प्रसिद्धो
मयैव दत्तेन वरेण वीरः ।
वेदान् मुनींश्चापि हयास्यमात्र-
वध्यो भृशं पीडयति प्रभावात् ॥8॥

दैवेन कृत्तं हरिशीर्षमद्य
संयोज्यतां वाजिशिरोऽस्य काये ।
ततो हयग्रीवतया मुरारिर्
दैत्यं हयग्रीवमरं निहन्ता ॥9॥

त्वमेवमुक्त्वा सदयं तिरोधा-
स्त्वष्ट्रा कबन्धेऽश्वशिरो मुरारेः ।
संयोजितं पश्यति देवसंघे
हयाननः श्रीहरिरुत्थितोऽभूत् ॥10॥

दैत्यं हयग्रीवमहन् हयास्यो
रणे मुरारिस्त्वदनुग्रहेण ।
सदा जगन्मंगळदे त्वदीयाः
पतन्तु मे मूर्ध्नि कृपाकटाक्षाः ॥11॥

---

दशकम् 3
महाकाळि अवतारम्

जगत्सु सर्वेषु पुरा विलीने-
ष्वेकार्णवे शेषतनौ प्रसुप्ते ।
हरौ सुरारी मधुकैटभाख्यौ
महाबलावप्सु विजह्रतुर् द्वौ ॥1॥

समाः सहस्रं यतचित्तवृत्ती
वाग्बीजमन्त्रं वरदे जपन्तौ ।
प्रसादिताया असुरौ भवत्याः
स्वच्छन्दमृत्युत्वमवापतुस्तौ ॥2॥

एकांबुधौ तौ तरळोर्मिमाले-
निमज्जनोन्मज्जनकेळिलोलौ ।
यदृच्छया वीक्षितमब्जयोनिम्
रणोत्सुकावूचतुरिद्धगर्वौ ॥3॥

पद्मासनं वीरवरोपभोग्यम्
न भीरुभोग्यं न वराकभोग्यम् ।

माता करोति तनयस्य कृते शुभानि
कर्माणि तस्य पतने भृशमेति दुःखम् ।
वृद्धौ सुखं च तव कर्म न नापि दुःखं
त्वं ह्येव कर्मफलदा जगतां विधात्री ॥6॥

सर्वत्र वर्षसि दयामत एव वृष्ट्या
सिक्तः सुबीज इव वृद्धिमुपैति भक्तः ।
दुर्बीजवद् व्रजति नाशमभक्त एव
त्वं निर्घृणा न विषमा न च लोकमातः ॥7॥

सर्वोपरीश्वरि विभाति सुधासमुद्र-
स्तन्मध्यतः परिवृते विविधैः सुदुर्गैः ।
छत्रायिते त्रिजगतां भवती मणिद्वी-
पाख्ये शिवे निजपदे हसिताननाऽऽस्ते ॥8॥

यस्ते पुमानभिदधाति महत्त्वमुच्चैर्
यो नाम गायति शृणोति च ते विलज्जः ।
यश्चाऽऽतनोति भृशमात्मनिवेदनं ते
स स्वान्यघानि विधुनोति यथा तमोऽर्कः ॥9॥

त्वां निर्गुणां च सगुणां च पुमान् विरक्तो
जानाति किञ्चिदपि नो विषयेषु सक्तः ।
ज्ञेया भव त्वमिह मे भवतापहन्त्रीम्
भक्तिं ददस्व वरदे परिपाहि मां त्वम् ॥10॥

---

# தேவீ நாராயணீயம்

By

## பாலேலி நாராயணன் நம்பூதிரி



<u>சமஸ்கிருதம்</u>

திருமதி. பாமா ராமகிருஷ்ணன், செங்கோட்டை

**04633 234360 96296 42600**

## दशकम् 1
## देवीमहिम

यस्मिन्निदं यत इदं यदिदं यदस्मात्
उत्तीर्णरूपम् अभिपश्यति यत्समस्तम् ।
नो दृश्यते च वचसां मनसश्च दूरे
यद्भाति चाऽऽदिमहसे प्रणमामि तस्मै ॥1॥

न स्त्री पुमान् न सुरदैत्यनरादयो न
क्लीबं न भूतमपि कर्मगुणादयश्च ।
भूमंस्त्वमेव सदनाद्यविकार्यनन्तं
सर्वं त्वया जगदिदं विततं विभाति ॥2॥

रूपं न तेऽपि बहुरूपभृदात्तशक्तिर्
नाट्यं तनोषि नटवत् खलु विश्वरङ्गे ।
वर्षाणि ते सरसनाट्यकलाविलीना
भक्ता अहो सहृदयाः क्षणवन्नयन्ति ॥3॥

रूपानुसारि खलु नाम ततो बुधैस्त्वं
देवीति देव इति चासि निगद्यमाना ।
देव्यां त्वयीर्यस उमा कमलाऽथ वाग् वा
देवे तु षण्मुख उमापतिरच्युतो वा ॥4॥

त्वं ब्रह्म शक्तिरपि धातृरमेशरुद्रैः
ब्रह्माण्ड सर्ग परिपालनसंहृतीश्च ।
राज्ञीव कारयसि सुभ्रू निजाज्ञयैव
भक्तेष्वनन्यशरणेषु कृपावती च ॥5॥